कालञ्जराधिपतिपरमर्द्दिदेवामात्य-

# कविवत्सराजप्रणीतरूपकषटम्

---

# A COLLECTION OF SIX DRAMAS

OF

## VATSARÂJA

---

EDITED WITH INTRODUCTION

BY

CHIMANLAL D. DALAL, M. A.

SANSKRTA LIBRARIAN, CENTRAL LIBRARY.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA GAEKWAD OF BARODA.

CENTRAL LIBRARY

BARODA.

1918.

# INTRODUCTION.

The present volume consists of six dramatical pieces from the pen of one and the same author. In the whole range of Sanskṛta literature, no author excepting the famous dramatist Bhâsa, is to be found whose so many dramas, all of a diverse nature, are brought to light in this way. All the dramas are of different varieties—Vyâyoga, Bhâṇa, Ḍima, Îhâmṛga, Prahasana and Samavakâra.[1] Vyâyoga, Bhâṇa and Prahasana are types which are not rare. But it will be noted that this collection publishes for the first time Îhâmṛga, Ḍima and Samavakâra, which are known to Sanskṛta readers only through the definitions given in rhetorical and dramatical works.

**The themes of the dramas**—The author has taken the plots of his dramas both from the Purâṇas and real life. The Kirâtârjunîya Vyâyoga (a Military spectacle) consisting of one act, has the same theme as that of the famous Mahâkâvya of the same name by Bhâravi i. e. the practice of penance by Arjuna, the combat of Arjuna and Śiva in the garb of a mountaineer and the latter's giving to Arjuna the great weapon (Mahâstra). Rukmiṇîharaṇa an Îhâ-

---

1 These are defined as under:—

एकाहचरितैकाङ्को गर्भामर्शविवर्जितः । अस्त्रीनिमित्तसङ्ग्रामो नियुद्धस्पर्धनोद्धतः ॥
स्वल्पयोषिज्जनः ख्यातवस्तुर्दीप्तरसाश्रयः । अदिव्यभूपतिः स्वामी व्यायोगो नायकां विना ॥
विज्ञेयः **समवकारः** स्यात् ख्यातार्थो निर्विमर्षकः । उदात्तदेवदैत्येशो वीथ्यङ्गी वीररौद्रवान् ॥
अत्र द्वादश नेतारः फलं तेषां पृथक् पृथक् । अङ्कास्त्रयस्त्रिशृङ्गारास्त्रिकपटास्त्रिविद्रवाः ॥
षड्युग्मैकमुहूर्त्ताः स्युर्निष्ठितार्थाः स्वकार्यतः । महावाक्ये च सम्बद्धाः क्रमादेकैकसन्धयः ॥
शृङ्गारस्त्रिविधो धर्मकामार्थफलहेतुकः । वञ्चयवञ्चकदेवेभ्यः संभवी कपटस्त्रिधा ॥
जीवाजीवोभयस्थः स्याद्विद्रवस्त्रिरमीषु तु । प्रत्येकमङ्केष्वेकैकं पद्यं च स्रग्धरादिकम् ॥
**भाणः** प्रधानशृङ्गारवीरो मुखनिवाहवान् । एकाङ्को दशलास्याङ्गः प्रायो लोकानुरञ्जकः ॥
एको विटो वा धूर्तो वा वेश्यादेः स्वस्य वा स्थितिम् । व्योमोक्त्या वर्णयेदत्र वृत्तिः प्रायेण भारती ॥
वैमुख्यकार्यं वीथ्यङ्गि ख्यातकौलीनदं भवेत् । हास्याङ्गि भाणसन्ध्यङ्कवृत्ति **प्रहसनं** द्विधा ॥
निन्दा पाषण्डिविप्रादेरश्लीलासभ्यवर्जितम् । परिहासवचःप्रायं शुद्धमेकत्र चेष्टितम् ॥
अश्रान्तहास्यशृङ्गारविमर्शः ख्यातवस्तुकः । रौद्रमुख्यश्चतुरङ्कः सेन्द्रजालरणो **डिमः** ॥
अत्रोल्कापातनिर्घाताश्चन्द्रसूर्योपरक्तयः । सुरासुरपिशाचाद्याः प्रायः षोडश नायकाः ॥
**ईहामृगः** सवीथ्यङ्गो दिव्येशो हतमानवः । एकाङ्कश्चतुरङ्को वा ख्याताख्यातेतिवृत्तवान् ॥
दिव्यस्त्रीहेतुसङ्ग्रामो निर्विश्वासः सविद्रवः । व्यपहारभेददण्डप्रायो द्वादशनायकः ॥
व्याजेनाऽत्र रणाभावो वधासन्ने शरीरिणि । व्यायोगोक्ता रसाः सन्धिवृत्तयोऽनुचिता रतिः ॥

नाट्यदर्पण II

mrga in four acts treats of the abduction of Rukmiṇî by Kṛshṇa and the defeat of Rukmi and Śiśupâla at the hands of Krishṇa. The Tripuradâha is a Ḍima in four acts. The plot is based on the Pauranic legend of the burning of the capital of Triputâsura by Śiva with his bow. The Samudramathana, a Samavakâra in three acts, relates the churning of the ocean by gods and demons and the marriage of Vishṇu with Laxmî. The cue to the Tripuradâha and the Samudramathana seems to have been taken from the Bharatanâṭyaśastra and from a remark in the Daśarûpa.[1] Out of the remaining two pieces Karpûracharitra describes the revelry, gambling and love of a gambler with a courtezan. The Hâsyachûḍâmaṇi—a farce in one act—holds up to ridicule an Âcharya of the Bhâgavata School and his knowledge of Kevalî Vidyâ with which he professes to trace lost articles and discover buried treasures.

**The author and his style**—The author of all these works is Vatsarâja who calls himself a minister of Parmaradideva of Kâlinjara. This Vatsarâja need not be confounded with the son of Mahîdhara and minister of Kîrtivarmadeva, who erected a flight of steps in Samvat 1154 or with the grand-father of Sallakshaṇa, a minister of Paramardi, who erected a temple of Vishṇu in Samvat 1252. One verse[2] of Vatsarâja is quoted in Jahlaṇa's Sûktimuktâvali but like Sûktis of many well-known poets quoted therein, it is not to be found in any of the dramas collected here. The style of the author is easy, forcible and graceful. It contains neither very long compounds nor jaw-breaking words. The plots too are well-executed. The dramas make very pleasant reading even in leisure hours.

**The date of the author**—The Kirâtârjunîya was first represented on stage under the order of king Trailokyavarmadeva and the other five under the order

---

1 तथा त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ।

Bharata Nâtyaśâstra.

इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् ॥

ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः । इति भरतमुनिना स्वयमेव त्रिपुरदाहेतिवृत्तस्य तुल्यत्वं दर्शितम्

यद्वदम्भोधिमन्थने । यथा समुद्रमथने वासुदेवादीनां लक्ष्म्यादिलाभाः ॥

Daśarûpâvaloka III.

आज्ञापय विभो ! क्षिप्रं कः प्रयोगः प्रयुज्यताम् ॥ १ ॥

ततोऽस्म्युक्तो भगवता योजयामृतमन्थनम् । एतदुत्साहजननं सर्वप्रीतिकरं तथा ॥ २ ॥

सोऽयं समस्तकार्यस्य धर्मकामार्थसाधकः । मया प्रग्रथितो विद्वन्स प्रयोगः प्रयुज्यताम् ॥ ३ ॥

Bharata Nâtyaśâstra.

मया समवकारस्तु योऽयं सृष्टः सुरोत्तम ! । श्रवणे दर्शने चास्य प्रसादं कर्तुमर्हसि ॥

2 सत्काव्यपीयूषसमुद्रमध्ये न वाडवाग्निर्न च कालकूटः ।

तस्यावगाहेन तथापि चित्रं खलस्य तापः परमोऽभ्युदेति ॥

of his father Paramardideva.[1] The reign of Paramardideva extended from 1163 to 1203 A. D. while that of Trailokyavarmadeva seems to have lasted till about the end of the first half of the thirteenth century.[2] Our author, therefore, should have flourished between the second half of the twelth and the first quarter of the thirteenth century A. D.

**Parmaradideva, the author's master**—Paramardideva was the immediate successor of Madanavarma, who was defeated by Siddharâja, king of Gujarat.[3]

---

1 नीलकण्ठजत्तामहोसवसमागदेहिं विअड्ढसामाजिएहिं परिअरिदो राआ परमड्डिएवो अत्तणो अमच्चेण कविणा वच्छराएण विरइदं हासचूडामणिं नाम पहसणं अहिणेदुमादिसदि भवंतं ।

Hâsyachûdâmaṇi p. 118.

वीररसैकवासनावासितोऽयं कालञ्जराधिपतिस्त्रैलोक्यवर्मदेवः कविवत्सराजचरितं किरातार्जुनीयं नाम व्यायोगमभिनेतुमादिशते ।

Kirâtârjunîya p. 1.

अथ किल नीलकण्ठयात्रामहोत्सवसमागतैर्विदग्धसामाजिकैः कालञ्जरपतेर्महाराजश्रीपरमर्द्दिदेवस्यामात्येन कविना वत्सराजेन.......

Karpûracharitra p. 23.

2 I. A. vol. XXXVII 121-124.

3 *c. f.* सभायां वैदेशिकेन भट्टेन भणितम्, अहो ! सिद्धनृपतेः सभा मदनवर्मण इव मनोविस्मयजननीति । राज्ञा पृष्टः, कोसौ मदनवर्मा नृपः ? । भट्टः प्राह, देव ! पूर्वस्यां महोबकं नाम पत्तनं, तत्र राज श्रीमदनवर्मा प्राज्ञस्त्यागी भोगी धर्मी नयी च । तस्य च राज्ञः पुरं सहस्रशो दृष्टमपि वर्णयितुं न शक्नोति कोऽपि । यदि मम वचोविश्वासो न स्यात्, तदा कोऽपि विदुरो मन्त्री प्रेष्यते, स च विलोक्य राज्ञे विज्ञपयति इति श्रुत्वा मन्त्रिणं प्राहिणोत् । सह भट्टेन षण्मासान् यावद्विलोक्य पश्चादायातेन मन्त्रिणा विज्ञप्तम् । श्रीसिद्धभूप ! वयमितः प्रहितास्तत्र वसन्तोत्सवे प्राप्ताः । तत्र च वसन्तोत्सवे गीयन्ते वसन्तान्दोलकादिरागैर्गीतानि । भ्रमन्ति दिव्यशृङ्गारा नार्यः । मकरध्वजभ्रान्तिकारिणो विलसन्ति लक्षशो युवानः । क्रियन्ते प्रतिरथ्यं छण्टनकानि यक्षकर्दमैः । प्रासादे प्रासादे संगीतकानि । देवे देवे महापूजाः । प्रतिगृहं सारा भोजनव्यापाराः । राज्ञः सत्रागारे तु कूरावस्रावणानि मुत्कलानि न मुच्यन्ते, किन्तु गर्तायां निक्षिप्यन्ते, यदि मुच्यन्ते तदा सघण्टो हस्ती निमज्जति । राज्ञोऽश्ववाराः परितः पुरं भ्रमन्तो बीटकानि ददते लोकाय । कर्पूरचूर्णैर्धूलिपर्वोत्सवः । रात्रौ विपणीन् वणिजो न संवृण्वन्ति, उद्घाटान्विमुञ्चन्ति । प्रातरागत्योपविशन्ति । एवं नीतिः । व्यवसायोऽप्याचारमात्रेणैव लोकानाम्, तं विनाऽपि प्रकारान्तरैरपि सिद्धार्थत्वात् । राजा तु मया न दृष्टः । इदं तु श्रुतम् । नारीकुञ्जरः स सभायां कदाऽपि नोपविशति केवलं हसितललितानि प्रत्यक्ष इन्द्र इव तनोति । एवं मन्त्रिवचः श्रुत्वा सिद्धराजोऽमितसैन्यैर्महोबकं प्रति प्रतस्थे । तदासन्नक्रोशाष्टकप्रदेशे तस्थौ । क्षुभितो देशः । स्थानाच्चलितं महोबकपत्तनम् । प्रधानैर्मदनवर्मा दिव्योद्यानस्थः स्त्रीसहस्रसमावृतो विज्ञप्तः स्वामिन् ! गौर्जरः सिद्धराज उपनगरमायातोऽस्ति, स कथं निवर्तनीयः । मदनवर्मणा स्मित्वा भणितम् । सिद्धराजः सोऽयं यो धरायां द्वादशवर्षाणि विग्रहायास्थात् । कबाडी राजा वाच्यः स भवद्भिर्यदि नो भुवं जिघृक्षसि तदा युद्धं करिष्यामः, अथार्थेन तृप्यसि तदाऽर्थं गृहाणेति । ततो यद्याचते स वराकस्तद्देयं भवद्भिः, न वयं घने दत्ते क्षुभ्यामः ।

Madanavarma appears to have been a very luxurious king. Parmardi, too, according to the Prabandhachintâmani led a luxurious life and daily killed one cook at the time of serving and consequently got the title of Kopakâlânala.[1]

---

सोपि जीवतु चिरं वित्तार्थं कृच्छ्राणि कर्माणि कुर्वाणोऽस्ति । राज्ञो वचो लात्वा मन्त्रिण: स्थानं ययु: । तावता सिद्धेशेन कथापितम्, दण्डं दत्थ । मदनवर्मदेवाय ज्ञापितं भवदागमनम् । तेनास्मत्प्रभुणो ..., कबाडी राजाऽर्थेन तर्पणीय: । स सिद्धराजस्तल्लीलया विस्मित: पण्णवती: कोटी: कनकस्यायाचीत् । दत्तास्ता: प्रधानै: सद्य: । देश: सुखं तस्थौ । प्रधानैर्भणितम्, कथं न प्रतिगच्छसि ? । सिद्धेशेन भाणितम्, मन्त्रिपुरुहूता:स्तं लीलानिधिं भवत्प्रभुं दिदृक्षे । तेऽपि मदनवर्मणमभणन् । अर्थेन तोषित: स क्लेशी राजा परं भणति, तं राजेन्द्रं द्रष्टुमीहे । ततो मदनेन भणितम्, एतु स: । तत: सैन्यं तथास्थं मुक्त्वा मितसैन्यस्तत्रोद्याने आयात: यत्र महाप्राकारस्थे सौधे मदनवर्माऽस्ति । प्राकाराद्बहिर्योधलक्षास्तिष्ठन्ति । प्रतोलीं यावदागत्य मध्येऽचीकथत् द्वा:स्थै: । आगम्यतां जनचतुष्केन सहेति राज्ञा ज्ञापितम् । आगतस्तथा सिद्धराज: यावत्पश्यति काञ्चनतोरणानि सप्त द्वाराणि । ददर्श रजतमहारजतमयीर्वापी:, नानादेशभाषावेषविचक्षणा नि:सीमसौभाग्यधारिणी: स्त्रीश्च, पणववेणुवीणामृदङ्गादिकलासक्तं समग्रपरिजनम् । शुश्राव गीतानि । नन्दनाधिकमुद्यानं, हंससारसादीन् खगान् हैमान्युपकरणानि, कदलीदलकोमलानि वसनानि, जनितानङ्गरागानङ्गरागान्, उत्तुङ्गपुष्पकरण्डांश्च, एवं पुर: पुर: पश्यन् अग्रत: साक्षादिव मदनं मधुरे वयसि वर्तमानम्, अमितरत्नमुक्ताफलाभरणं, सर्वाङ्गलक्षणं, काञ्चनप्रभं, मधुरस्वरं, तामरसाक्षं, तुङ्गघोणम्, उपचितगात्रं, मदनवर्माणमपश्यत् । मदनोऽप्यभ्येत्याश्लिष्य च हेमासनं दत्वा तमभाणीत् । सिद्धेन्द्र ! पुण्यमस्माकमद्य, येन त्वमतिथि: संपन्न: । सिद्धनृप: प्राह हे राजन् ! आवर्जनावचनमिदं मिथ्या यत्तु मन्त्रिणामग्रे कबाडीत्युक्तं तत्सत्यं । मदनो जहास । राजन् ! केन विज्ञप्तमेतत् ? । सिद्धेश: प्राह, तव मन्त्रिभि: । कोऽभिप्रायो मन्निन्दने । मदनोऽप्याह । देव ! कलिरयं, स्वल्पमायु:, मिता राज्यश्री: तुच्छं बलम् । तत्रापि पुण्यै राज्यं लभ्यते । तदपि चेन्न भुज्यते, रुल्यते विदेशेषु, तत्कथं न कर्बाटिकत्वम् ? । मन्यमेनदित्याह सिद्धेश:, धन्यस्त्वं यस्येत्थं शर्माणि, त्वयि दृष्टे सफलं जीवितमस्माकम्, चिरं राज्यं भुंक्ष्व इत्युक्त्वा तस्थौ । ततो मदनेनोत्थाय निजं देवतावसरकोशादि दर्शितम् । प्रेमाधिक्यमन्योन्यं जातम् । विंशत्यधिकशत १२० पात्राणि स्वाङ्गसेवकानि दत्तानि । तत: सिद्धेश: पत्तनमलञ्चकार विंशत्यधिक शत २० पात्रमध्यादर्द्धं मार्गे मृतं मार्दवात्, शेषं पत्तने प्रापत् । अत: प्रोक्तं कविभि:—

महोबकपुराधीशाञ्जितान्मदनवर्मण: ।
कोटी: षण्णवतीर्हेम्नां यस्तन्मानमिवाददे ॥

Jinamaṇḍaṇa's Kumârapâlaprabandba.

1 अथ परमर्दिनामा नृपो जगत्युदाहरणीभूतं परमैश्वर्यमनुभवन् निद्रावसरवर्जं रात्रिंदिवं निजौजसा विच्छुरितं छुरिकाभ्यासं विदधानोऽशनावसरे परिवेषणाकुलं प्रतिदिनमेकैकं सूपकारमकृप: कृपाणिकया निघ्नन् षष्ठ्यधिकशतत्रयेण भक्तकाराणां वर्षे निषेव्यमाण: कोपकालानल इति बिरुदं बभार ।

आकाश ! प्रसर प्रसर्पत दिशस्त्वं पृथ्वि ! पृथ्वीभव
प्रत्यक्षीकृतमादिराजयशसां युष्माभिरुज्जृम्भितम् ।
प्रेक्षध्वं परमर्दिपार्थिवयशोराशेर्विकाशोदया-
द्बीजोच्छ्वासविदीर्णदाडिमदशां ब्रह्माण्डमारोहति ॥

He is well known as Paramâla to the readers of the Chanda Râsâ. (Mahobâ Samaya). The defeat of Paramardideva at the hands of Pṛthvîrâja is confirmed by the short inscriptions recorded by the order of Pṛthvîrâja at Madanapura in 1183 A. D. Later on he was attacked and defeated by Kutb-ud-din Ibak in 1203 A. D. Shortly after this defeat he died a natural death. Kâlinjara seems to have been soon recovered by the Chandels as Trailokyavarma is also called, like his father, Kâlinjarâdhipati (lord of Kâlinjara). Paramardideva was liberal.[1] That he was a man of letters and a poet too is testified by his composition of a long Praśasti to Śiva,[2] which, however, seems to have been composed by Vatsarâja, as it contains the verse (दास्येऽहं) found in the Karpûracharitra.

**The Manuscript material**—The present edition of Vatsarâja's dramas is based on two palm-leaf mss. of the works hitherto known. The first consisting of 183 leaves contains (1) Hâsyachûḍâmaṇi 1–51, (2) Tripuradâha 52–103, (3) Kirâtârjunîya 104–130, and (4) Samudramathana 131–183, while the other contains Karpûracharitra 1–18 and Rukmiṇîharaṇa 1–39. Both of these measure 14″×1½″ and contain 3 to 4 lines containing about 50 letters each and are written in the same hand. These mss. bear

---

इत्यादिभि: स्तुतिभि: स्तूयमानश्चिरं राज्यसुखमनुबभूव । स च सपादलक्षक्षितिपतिना श्रीपृथ्वीराजेन सह सञ्जातविग्रह: समराजिरमधिरूढ: स्वसैन्ये पराजिते कान्दिशीक: कामपि दिशं गृहीत्वा पलायनपर: स्वराजधानीमाजगाम । अथ तस्य पार्थिवस्यापमानितसर्वसेवको निर्विषयीकृत: पृथ्वीराजराजसभामुपेत: प्रणामान्ते किं दैवतं पूज्यते परमर्दिपुरे विशेषात्सुकृतिभिरिति स्वामिनादिष्टस्तत्कालोचितं काव्यमिदमपाठीत् ।

मन्दश्चन्द्रकिरीटपूजनरसस्तृष्णा न कृष्णार्चने
स्तब्ध: शम्भुनितम्बिनीप्रणतिषु व्यग्रो विधातृग्रह: ।
नाथो न: परमर्द्दिनेन वदनन्यस्तेन संरक्षित:
पृथ्वीराजनराधिपादिति तृणं तत्पत्तने पूज्यते ॥

इति स्तुतिपरितोषितेनानुजग्राह ।

प्रबन्धचिन्तामणि pp. 229–300

1 अनारतादानपरम्पराभिर्निर्वेदमायाति कदाचिदुर्वी । बिभर्ति तत्पूर्वमिव प्रहर्षं मुहु:प्रदानै: परमर्द्दिराज: ॥

Tripuradâha I. 4.

युष्माभिर्यौगपद्येन सर्वकामार्थसिद्धये । परमर्द्दिनरेन्द्रो वा समुद्रो वा निषेव्यताम् ॥

कविवत्सराजविरचितसमुद्रमथनसमवकाराभिनयेन न: परमर्द्दिदेव एव पूरिताशेषमनोरथ: समुद्रो भविष्यति ।

Samudramathana p. 150.

2 J. A. S. B. vol. XVII p. 313.

*cf.* also एष श्रीपरमर्द्दिदेवनृपतिर्नि:सीमविद्यानिधिर्नूनं वागधिदेवता भगवती पुम्भावमभ्यागता ॥

Hâsyachûdamaṇi I. 4.

numerical figures on both the sides of the leaves and not letters on the right as in most of the palm-leaf mss. of Gujarat. They are not dated, but from the script, they appear to have been transcribed about the end of the thirteenth century A. D. None of these contain the chhâyâ of the Prâkṛta passages occurring in the texts. The Deccan College paper ms. of Vatsarâja's Hâsyachûḍâmaṇi, appears to have been copied by a Jain Yati about 250 years ago, directly or indirectly from the present palm-leaf ms. Our thanks are due to Sheth Gabharuchand Vastachand keeper of the Bhandar of palm-leaf mss. in the Khetarwasi's Pada, Pattan for lending us these rare mss.

## CONTENTS.

MISPRINTS

P. 4 l. 21 व्यावर्तन्ते
P. 5 l. 8 सदनमिव...
P. 9 l. 25 महाभागाः !
P. 10 l. 27 उद्घरितः
P. 12 l. 22 सः
P. 12 l. 26 उद्घरितः
P. 17 l. 13 कुरुवंश
P. 19 l. 13 कोअण्ड
P. 20 l. 5 मनोशो
P. 27 l. 31 प्रकटय
P. 30 l. 24 पातयितव्य
P. 30 l. 28 प्रमत्तेन
P. 32 l. 26 एषः
P. 33 l. 17 उव्वरिद
P. 33 l. 25 महोत्सव
P. 33 l. 24 एतदेवोद्घरितम्
P. 34 l. 8 आकाशे
P. 34 l. 17 सोंडिओ
P. 34 l. 28 वञ्चितायाः
P. 38 l. 12 प्रगल्भमान
P. 50 l. 26 इत
P. 52 l. 27 प्रहोतु
P. 55 l. 29 दोलायते
P. 65 l. 2 महूसवं
P. 72 l. 11 समराङ्गण
P. 76 l. 3 शौरे
P. 77 l. 27 विहस्ततां
P. 79 l. 11 वर्ध्रिः
P. 83 l. 23 ऊर्ध्वं
P. 89 l. 29 समराणं
P. 89 l. 19 द्वितीयः···मह्यं
P. 94 l. 25 वस्तव्यम्
P. 95 l. 15 वरूथिनी
P. 97 l. 8 सचिव
P. 109 l. 3 मयूख
P. 134 l. 21 मालिका
P. 136 l. 27 पुनः
P. 139 l. 24 दत्ताः
P. 145 l. 19 मात्रेणैव
P. 150 l. 3 यौगपद्येन
P. 151 l. 25 निज···निन्दित
P. 154 l. 24 प्रसार
P. 156 l. 27 लघुकाः
P. 163 l. 20 देवाः
P. 172 l. 12 अणुभूय
P. 183 l. 25 एतां निरुपयुक्तां
P. 184 l. 27 किमनार्योचितं
P. 185 ls. 9 & 13 क्व & धिक्
P. 186 l. 23 समाश्वसितु
P. 187 ls. 6 & 7 पेशलाशीः & लक्ष्मो
P. 188 ls. 12 & 16 धत्ते & पनीत



अमात्यवत्सराजप्रणीतरूपकसङ्ग्रहे

# किरातार्जुनीयव्यायोगः

सा पातु वस्त्र्यम्बकचुम्बितायाः
  कपोलपाली चिरमम्बिकायाः ।
प्रगल्भरोमाञ्चभरेण यस्याः
  पुष्पायुधोऽभूत्क्षणमङ्कुरास्त्रः ॥ १ ॥

( नान्द्यन्ते )

सूत्रधारः—कः कोऽत्र भोः ? ।

( प्रविश्य )

स्थापकः— भाव किमुच्यते ? । माहेश्वरोऽसि, तदपि माहेशान्येव नान्दीपदानि वीररसानुविद्धान्यपराणि पठतु भावः ।

सूत्र०—( विहस्य ) मार्ष ! किमेतत् ? ।

स्थापकः—पठतु तावद्भावः ।

सूत्र०—येनोत्तम्भितदुर्मदान्धकतनुच्छत्रस्य दण्डायितं
  यत्प्राप्यायुधमङ्गनाऽपि दनुजध्वंसं चकाराऽम्बिका ।
यद्दृष्ट्वैव बिडौजसो लिखितवद्दम्भोलिरासीत्करे
  चन्द्रार्द्धाभरणस्य तद्भगवतः शूलं शिवायास्तु वः ॥ २ ॥

तदिदानीं कथय किमेतत् ? ।

स्थापकः—भाव ! वीररसैकवासनावासितोऽयं कालञ्जराधिपतिस्त्रैलोक्यवर्मदेवः कविवत्सराजविरचितं किरातार्जुनीयं नाम व्यायोगमभिनेतुमादिशति । तेन मया वीररसात्मकान्यपराणि चत्वारि नान्दीपदानि पठितानि ।

सूत्र०—( सहर्षम् ) युज्यते ।

श्यामा सदङ्गसुभगा करपङ्कजाग्रदुर्लोलना विहरमाणमनोज्ञकाम्या ।
त्रैलोक्यवर्मनृपतेर्मनसि प्रमोदमाविष्करोति करवाललता, न कान्ता ॥३॥

( विचिन्त्य सोल्लासम् )

कवेः कवित्वं पटुता नटानां भर्गार्जुनीयं चरितं पवित्रम् ।
तदैहिकामुष्मिकसौख्यहेतुर्दत्तो नियोगोऽद्य नरेश्वरेण ॥ ४ ॥

मार्ष ! का पुनरभिनयवेला निरूपिताऽस्ति ? ।

स्थापकः—भाव ! नन्वयमेव स्वभावाभिरामः श्यामारम्भ[illegible]मयः ।
अत्र हि—

चन्द्रोऽर्जुनः समधिकृत्य पुरन्दराशामासादयन्नुदयहेतुमसौ [illegible]रीशम् ।
उन्मुद्रयन्नचिरमेव जगत्प्रमोदमाविष्करिष्यति विपक्षनमःप्रण[illegible]म् ॥ ५ ॥

( नेपथ्ये )

साधु शैलूषशिरोमणे ! साधु । गृहीतेयं सदुपश्रुतिर्भवतु फल[illegible]लिनी ।

सूत्र०—( समाकर्ण्य सहर्षम् ) मार्ष ! हिमवति तपस्यतोऽर्जुनस्य [illegible]ायनोपनीतोऽयमनुचरः सिद्धादेशो व्याहरति । तदेत्यावामनन्तरकरणीयं स[illegible]याव ।

( इति निष्क्रान्तौ )

प्रस्तावना ।

---

( ततः प्रविशत्यर्जुनः सिद्धादेशश्च )

सिद्धादेशः—आयुष्मन् ! किं पुनः समग्रसमीहितासिद्धिसामग्रीसम्भवेऽपि विमना इव विभाव्यसे ? ।

अर्जुनः—( सक्रोधाहङ्कारम् ) क्व मे वैमनस्योपशान्तिः ! ।

अपार्थः पार्थोऽहं धनुरधिगुणं निर्गुणमिदं
विसारा एतेऽपि प्रसरणपराः सम्प्रति शराः ।
न यावन्नो राजा समरभुवि कौरव्यबलव-
त्कबन्धानां नृत्यैरनुभवति नेत्रोत्सवसुखम् ॥ ६ ॥

सिद्धा०—आयुष्मन् ! किमेवं खिद्यते भवान् ? । इन्द्रजालपुरुषा इव दृश्यमाना अप्यविद्यमाना एव तव शात्रवः । इदानीमपि धर्मात्मज एव राजा ।
तथाहि—

तद्वैरिणां यमसमागमहेतु राज्यं युष्माकमेव सुतरां प्रकटोपयोगम् ।
सत्क्षत्रियोचितदुरोदरसम्प्रदत्तं धर्मात्मजः किमु न पुष्यति तेन धर्मम् ॥७॥

अपि च । विशदकोदण्डवेदविद्याविदग्धस्य वासुदेवद्वितीयात्मनो भवतः कटुतरतपःक्लेशसहनसाहसमपि नोचितं मन्ये ।

अर्जुनः—सखे सिद्धादेश ! गुरुनिदेशवशंवदोऽहं तपसि प्रवृत्तः । मां पुनरन्य एव मुनिजनसमाचारः समुत्कण्ठयति । आकर्णयतु भवान्—

क्रूरारातिकृतावधिव्यतिकरश्यामावकाशे गते
दोर्दण्डोदयशैलशालिनि महाशौर्यार्यमप्रोद्गमे ।
क्रोधाग्निं प्रतिबोध्य दुर्मदभटस्तोमाङ्गवल्लीसमि-
द्धोमप्रेमपरायणो मुनिरहं भूयासमित्यर्थये ॥ ८ ॥

अपि च—

चेतः पराक्रममयं पटिमाऽऽयुधेषु प्रौढौ भुजौ भुजभृतामयमेव पन्थाः ।
अस्त्रप्रयोगपरिकर्मणि मन्त्रयोगं व्रीडाकरं तमपि कार्मणमेव मन्ये ॥ ९ ॥

सिद्धा०—( पुरोऽवलोक्य सहर्षम् ) महाभाग ! दिष्ट्या वर्द्धसे । फलितमेव तव तपः । पश्य पश्य—

भानोर्विभां रूक्षतमां मनोज्ञैः प्रत्यन्तरत्नैरवमानयन्ती ।
हिमाचलं काञ्चनशैलयन्ती त्वां व्योमतोऽभ्येति विमानमाला ॥ १० ॥

अर्जुनः—( सोपहासम् ) अहो रभसः प्रियवयस्यस्य । इत्थं किल समरमनोरथपूरणोन्मुखेषु प्रत्यर्थिरथेषु लोचनपथावतीर्णेषु परं परितुष्यते ।

सिद्धा०—उपहसतु महाभागः । अहं पुनर्जाने दुश्चरतपश्चरणमेदुरितपुण्यराशीनेव घृताचीरम्भातिलोत्तमोर्वशीप्रमुखसुराङ्गनाविमानान्युपसर्पन्ति ।

अर्जुनः—( सावज्ञं विहस्य ) किं मां लोभयति वयस्यः ? ।

मां वा रिपुं वा युधि दीर्घसुप्तसमेताः समेष्यन्ति यदा ग्रहीतुम् ।
विमानयानं सुरसुन्दरीणां दृष्ट्वा तदाऽहं भविता प्रहृष्टः ॥ ११ ॥

( नेपथ्ये )

लाअण्णलहरिपिहिदं अंगे तणुअत्तणं वहन्तस्स ।
जमणियमदूमिदस्सवि पिच्छह चंगत्तणं मुणिणो[1] ॥ १२ ॥

---

१ लावण्यलहरीपिहितमङ्गे तनुत्वं वहतः ।
यमनियमदूनस्यापि पश्यत चङ्गत्वं मुनेः ॥ १२ ॥

**अर्जुनः**—( आकर्ण्य ) कथं निकटावतरणानि व्योमतो विमानानि ! । ( सखेदम् ) अहो मे संसोढबाल्यरिपुपराभवस्य दुःसहशारीररिपोः कुसुमायुधस्य सर्वङ्कषो दुष्प्रतीकारः पराभवः समुपस्थितोऽयम् । एताह्यप्सरसः कुसुमायुधस्य महायुधम् ।

( सवितर्कम् ) पृषत्कव्यापारः प्रभवति पुरन्ध्रीषु कतमः
प्रयुक्तः शापाग्निः कृशयति तपःकोशनिचयम् ।
तदेताः प्रत्यग्रस्मररसमहानाटकनटी-
र्निराकर्त्तुं शक्तो भवति क उपायः सुरवधूः ॥ १२ ॥

तदेवं तावत् । ( प्रकाशम् ) सखे सिद्धादेश ! शशाङ्कशेखरप्रसादफलतपःपरायणस्य न युज्यते सुरसुन्दरीदर्शनम् । तदिहोपरिष्टादिषुपटलमयं वितानं वितनोमि ( इति तथा करोति )

**सिद्धा०**—( समन्तादवलोक्य साश्चर्यम् ) महाभाग सव्यसाचिन् ! बहुशोऽनुभूतानि मया धनदसदने महानिधानानि । अननुभूतमिदं बहुनिधानं धनुर्निधानं मया । नह्येकधनुषा द्विभुजेन परिमितशरेण धन्विना कर्मैतद्विधीयते ।

( नेपथ्ये

किं पातालमगाद्विहङ्गमपतिस्त्रासवित्रासिताः
प्रोत्सर्पन्ति सरीसृपाः परिलसन्निश्वासशब्दोर्मयः ।
स्वैरी किन्नु दिवापि नृत्यति शिवस्तन्मौलिगङ्गाजल-
व्याविद्धस्य ललाटनेत्रशिखिनो धूमैः किमुज्जृम्भितम् ॥ १३ ॥

( पुनर्नेपथ्ये )

आः कोऽयं कुतर्कः ! । ननु व्यक्तमेव लोलन्ति नाराचमालाः, व्यावर्त्तन्त विमानानि । मा कदाचन मायामयमहासुरसन्निपातोऽयं भविष्यति । तदिदानीमपथ्यमेव मुनिजनोपसर्पणमप्सरसाम् । पुरन्दरानुसरणमेव शरणम् । स एवैतदद्भुतानुरूपं यत्किञ्चित्करिष्यति ।

**सिद्धा०**—( विभाव्य ) पार्थ ! निवर्त्तितान्येव विमानानि पाकशासनसचिवैः ।

अर्जुनः—( स्वगतं सहर्षम् ) दिष्ट्या शराच्छादनबिभीषिकयोपशान्तः प्रत्यूहभूतोऽप्सरःसमागमः । तपःसाधनतपनबिम्बदर्शनाय धृतं च छिद्रमेकम् ।

सिद्धा०—( साश्चर्यम् ) अहो तव हस्तलाघवम् ! । पश्य ! पश्य !—

अविरलशरजालैश्छन्नमन्योन्यलग्नै-
र्दिनपरिवृढबिम्बव्यक्तये क्लृप्तरन्ध्रम् ।
उपरि चतुरचौरैर्दत्तसन्धिप्रकारं
सदनमिव विश्वमेतद्विभाति ॥ १४ ॥

अर्जुनः—सखे सिद्धादेश ! समादिश तौ निजकिरातौ यथेह न कश्चिदविज्ञातः समापतति ।

सिद्धा०—( नेपथ्याभिमुखमवलोक्य ) सखे शार्दूल ! सखे कण्ठीरव ! ।

उभौ—( प्रविश्य ) आणवेदु महाभाओ[1] ।

सिद्धा०—भद्रौ ! तिष्ठतमवहितौ भवन्तौ परतः । मा कश्चिदिहाविदितः समापततु ।

किरातौ—इंदो वि अ सासणेण समागमिस्सदि । ( निष्क्रम्य पुनः प्रविश्य ) अज्ज ! महामुणी कोवि मुणिजुअलजुत्तो समेदि[2] ।

अर्जुनः—( सादरम् ) समागच्छतु महर्षिः ।

किरातौ—जहा आणवेदि सामी[3] । ( इति निष्क्रामतः )

( ततः प्रविशति यथानिर्दिष्टो मुनिवेषो महेन्द्रः )

महेन्द्रः—( अर्जुनमालोक्य स्वगतं सहर्षम् ) दिष्ट्याद्य समासादितमर्जुनसंदर्शनम् । ( सानुतापम् ) वञ्चितानि परं मया वेषान्तरतिरोहितानीतरविलोचनानि । ( सकरुणम् ) अथवा साधु संवृत्तम् ।

सूनोर्वक्त्रसरोजदर्शनसुधास्वादेन दूरीकृतै-
रप्यक्ष्णां निचयैर्ममाद्य विजितं तैरेव गुप्तात्मभिः ।

---

१ आज्ञापयतु महाभागः ।

२ इन्द्रोऽपि च शासनेन समागमिष्यति । आर्य ! महामुनिः कोऽपि मुनियुगलयुक्तः समेति ।

३ यथा आज्ञापयति स्वामी ।

यैरेवंविधमस्य दारुणदशादत्तोग्रदुःखोद्गमं
दृष्ट्वा निःसरदुष्णबाष्पसलिलैर्लेभे न दाहोदयः ॥ १५ ॥

अर्जुनः—( मुनिवेषं महेन्द्रमालोक्य सहर्षम् ) सखे सिद्धादेश ! अहो महानुभावता महामुनेः !

स्वीकरोति करुणामयमूर्त्तिर्मामयं सपदि कोऽपि मुनीन्द्रः ।
अप्यहो परिचयक्रमवाह्ये स्निह्यतीह पितरीव ममात्मा ॥ १६ ॥

तदेनमभ्युत्तिष्ठाव। ( इति यथावदभ्युत्थाय ) वैयाघ्रपद्यगोत्रो मध्यमपाण्डवोऽभिवादयते भवन्तम् ।

महेन्द्रः—अभिलषितभाजनं भूयाः ।

सिद्धा०—( आसनमुपनीय ) अलङ्क्रियतामासनम् ।

( सर्वे यथोचितमुपविशन्ति )

महेन्द्रः—महाभाग ! त्वद्वेषदोलायितो न जाने कयाऽभ्युपपत्त्या भवन्तमुपचरामि । तथाहि—

अभ्यस्ताः श्रुतयो महास्मृतिपथे क्षुण्णं मदीयं मनो
दृष्टास्तेऽपि महर्षयः परिचितास्ते ते परिव्राजकाः ।
साप्यालोकि पुरन्दरस्य परिषन्नादर्शि नाश्रावि वा
कोदण्डेषुधिवल्कलाक्षवलयालङ्कारमित्थं तपः ॥ १७ ॥

तदिदं व्याहरामि—

यद्येतां चतुरम्बुराशिपरिखामुर्वीं बुभुक्षुर्भवां-
स्तच्चापोऽयमुपास्यतां कशयसि प्राणं तपोभिर्मृषा ।
मुक्तौ सक्तिरथास्ति ते परिहर क्रूरामिमां प्रक्रियां
सर्वत्रैव विनिद्रसौहृदरसं सन्धेहि शुद्धं मनः ॥ १८ ॥

अर्जुनः—( सखेदं दीर्घमुष्णं च निःश्वस्य ) अविदितवृत्तान्तस्तातो मामेवं व्याहरति ।

भुक्तिर्भूचक्रवाले कृतकपटशतैः संहृता वैरिवर्गैः
राज्ञा पाशेन बद्धः कथमिव नृपतेः प्राप्नुयां मुक्तिसौख्यम् ।
तन्मे क्लैब्यैकवृत्तेर्दलयति हृदयं भुक्तिमुक्त्योः कथाऽपि
प्रारम्भोऽयं गुरूणां यदहमिह तपःसंविधाने नियुक्तः ॥ १९ ॥

महेन्द्रः—( स्वगतं साशङ्कम् ) कथं मां ताततेति वत्सो व्याजहार। न खल्वनेन तपःसमुद्भूतातीन्द्रियज्ञानेन विदितोऽस्मि। भवत्वहमपि सन्दिग्धेनैव व्याहरामि। ( प्रकाशम् ) वत्स! किमद्यापि ते मोहमलीमसं मानसम्। मुञ्च मुञ्च दुरध्यवसायम्। पश्य पश्य न खलु त्वदनाहतैर्वैरिभिर्न मर्तव्यम्। न च त्वया निहतवैरिणा न मर्त्तव्यम्। नहि कवलितमूषिकेण बिडालेन न म्रियते। न च वञ्चितबिडालकवलनापायैर्मूषकैर्न म्रियते। तदेवं साधारणकृतान्तव्यापदामुपहंसनीयोऽयं दुर्व्यापारः। तदत्रभवते महोदय एव स्वदताम्।

अर्जुनः—( सानुतापम् ) तात! अननुभूतपराभवाभिषङ्गोऽसि। किमुच्यते?। तदत्रभवन्तं विज्ञपयामि। अनतिक्रमणीयवचनोऽसि। नैवं पुनः पुनर्व्याहर।

> उत्कृत्यायससायकेन समरे दर्पोद्धतान्विद्विष—
> स्तद्विश्वं दिवसेश्वरस्य सहसा भित्त्वात्मना पत्रिणा।
> मुक्तिर्या समवाप्यते भवतु नः सैव प्रमोदास्पदं
> कर्मज्ञानसमुच्चयोपजनितां दूरे नमस्यामि ताम्॥ २०॥

महेन्द्रः—( स्वगतं सहर्षम् ) अहो! वीररसैकग्रहिलता वत्सस्य। अहो! स्थिरवैरता। दिष्ट्या निष्पन्नमेव भुवो भारावतरणम्। तथाहि—

> मुरारिमारुतस्फीतो धनञ्जयधनञ्जयः।
> गुरूनपि द्विषद्वंशानशेषानेष धक्ष्यति॥ २१॥

तदहमिदानीं प्रकटीभवामि समाश्वासनाय वत्सस्य।

( इति तथा करोति )

अर्जुनः—( विलोक्य साश्चर्यं सहर्षम् ) कथमयं सहस्रनयनो नयनोत्सवाय संवृत्तः। तदिदानीं सविशेषं प्रणमामि। ( इत्युपसृत्य पदयोः पतति )

महेन्द्रः—( उत्थाप्य शिरसि समाघ्राय ) वत्स!

> अस्राक्षीच्चतुराननः स भगवान्यत्पूर्वमम्भः क्रमा-
> द्देवो दानवसूदनः प्रतिकलं यत्पालयाञ्चक्रिवान्।
> तद्विश्वं सहसैव तौ च दलयन्कल्पान्तकालोद्धत-
> व्यापारः परमेश्वरः प्रहरतु प्रत्यर्थिनस्तावकान्॥ २२॥

अर्जुनः—( सप्रश्रयम् ) भगवन् ! गीर्वाणवर्गचक्रवर्तिनोऽत्रभवतो भगवति भर्गेऽपि निदेश एवायं न पुनराशीः ।

महेन्द्रः—वत्स ! वत्स ! । मैवम् ।

यत्प्राप्तुं तरलीभवत्यथ मनो व्यावर्त्तते व्रीडया
यस्योपायनिरूपणे नयविदां मन्दायते नैपुणम् ।
तेऽपि ब्रह्मजनार्दनप्रभृतयो न्यञ्चन्ति यत्प्रार्थिता-
स्तान्नेत्राञ्चललीलयैव घटयत्येकः परं शङ्करः ॥ २३ ॥

सिद्धा०—भगवन् सहस्राक्ष ! भवतः साक्षात्कारेणैव पूर्णमनोरथः पार्थः संवृत्तः । तथाहि—

कथमन्धबलात्तेषां पाण्डवानां भवेद्भयम् ।
सहस्रनयनः पक्षे येषामुज्जागरः सदा ॥ २४ ॥

महेन्द्रः—अयि गुह्यकोत्तम ! मैवम् ।

ऐक्यं गतः श्रीपुरुषोत्तमेन कृत्वान्धकोद्दामबलप्रणाशम् ।
शिवप्रसादेन शिवानुभावः पृथासुतोऽयं भविता सुशक्तिः ॥ २५
तदापृच्छतु मां वत्सः ।

अर्जुनः—( सकरुणप्रश्रयम् ) तात पुरुहूत !

प्रेमार्द्रनेत्रोत्पलकाननाढ्यं त्वत्कायकासारमिमं विमोक्तुम् ।
दुर्वृत्तदायादनिदाघतप्तः समीहते मे न मनोमरालः ॥ २६ ॥

महेन्द्रः—वत्स ! वत्स ! मा विषीद । प्रसादितचन्द्रशेखरं चन्द्रशेखरास्त्रनिरस्ताशेषकौरव्यं पुनस्त्वामहं द्रक्ष्यामि । ( इति तिरोधत्ते )

अर्जुनः—सखे सिद्धादेश ! एहि भगवतीं भागीरथीमुपास्य भगवन्तं भर्गमुपास्महे ।

( नेपथ्ये )

अत्याहितमत्याहितम् ।

कुर्वन्घर्घरमारवं पृथुरदो घोणां समुत्फुल्लय-
न्नङ्गःसङ्गमिवोच्चकैस्तनुरुहस्तोमं दधत्पीवरम् ।

गङ्गातीरतपस्विवैशसरसव्यासक्तचित्तो जवा-
त्क्रोडोऽयं कलितः क्रुधा कलिरिव क्रूराशयो धावति ॥ २७ ॥
कुद्दालीयति सान्द्रकन्दपटले बाढं कुठारीयति
स्कन्धाग्रेषु परश्वधीयति शिखाशाखासु सम्पातिनी ।
दंष्ट्रेयं विकटा किटेः प्रतिपदं मार्गद्रुमद्रोणिषु
क्रूरक्रूरपराक्रमप्रणयिनी किं किं न सम्पद्यते ॥ २८ ॥

अर्जुनः—( ससम्भ्रमं विवृत्यावलोक्य ) कथमयं कृतकर्णकाषः कटुः कोलाहल एव श्रूयते ? । न कोऽपि लोचनपथमवतरति ।

सिद्धा०—क्व पुनस्तौ किरातौ ? । न खलु व्यापादितौ ।

( प्रविश्य )

किरातौ—महाभाआ ! परित्ताअध परित्ताअध । एसो खु पअंडतुंडाभिहदविअलन्तविसालन्तजालनिवडन्तसबरवरवीरसरीरविसमीकअमग्गो रुहिरोहपिंजरिददाढाजुओ दारन्तोव्व सअलभुअणाइं घोरघुरुक्कारेहिं भीसणो कोवि भूआररूओ अवमिच्चू पविट्टो[1] ।

अर्जुनः—( सावज्ञं विहस्य ) भद्रौ ! न भेतव्यं न भेतव्यम् ।

सिद्धा०—महाभाग गाण्डीवधन्वन् ! सज्जीभव सज्जीभव । अयमागत एव नेत्रपात्रतां पोत्री ।

अर्जुनः—( धीरं विलोक्य साश्चर्यं सवितर्कम् )

विक्रान्तो बहिरम्भसस्तरलधीर्दंष्ट्रामिषादब्जिनी-
कन्दच्छेदसुखः किमेष सलिलस्तम्बेरमस्याभकः ।
संहारेऽपि निजप्रसक्तिपटुतां संदर्शयन्नुत्कटां
साक्षादादिवराह एव किमयं प्रागुद्धृतक्ष्मातलः ॥ २९ ॥

( नेपथ्ये )

कष्टं कष्टं शिवसेवैकताने तपसि प्रवृत्तोऽपि कथमयं विकटकटुकोटि-

---

१ महाभागा ! परित्रायध्वं परित्रायध्वम् । एष खलु प्रचण्डतुण्डाभिहतविगलद्विश्रयज्जालनिपतच्छबरवरवीरशरीरविषमीकृतमार्गः रुधिरौघपिञ्जरितदाढायुतः दारयन्निव सकलभुवनानि घोरघुरुत्कारैः भीषणः कोऽपि भूदाररूपः अपमृत्युः प्रविष्टः ।

किटिदंष्ट्राभिघातमापद्यते मुनीन्द्रः। आः शङ्कर! परित्रायस्व परित्रायस्व। किमुदार्माना ऽस्मि, किमिति स्वेनैव स्वनाम प्रोञ्छसि?।

अर्जुनः—( श्रुत्वा मनस्यमाकाशे लक्ष्यं बद्ध्वा निःश्वस्य )

पार्थस्तपस्वितां लेभे दुर्दैव! प्रीयतां भवान्।
मुनयो हन्त शङ्कन्ते भूदारादारुणं मयि ॥ ३० ॥

( पुनर्नेपथ्ये )

अयि मुनीश्वर!

सेव्यः परं स भगवान्नवचन्द्रचूडस्तस्यापि दैववशतः करुणानुरोधः।
अस्मिन्वने मुनिजनव्यसनोपशान्त्यै कोदण्डपाणिरयमेव हरः किरातः ३१॥

तदयमेवाभ्यर्थ्य मुनेरस्य प्राणत्राणाय नियुज्यताम्।

अर्जुनः—( समाकर्ण्य ) अहह! इदमन्यदतिदारुणतरमुपस्थितं यन्मां किरातः परित्रायते।

सिद्धा०—पार्थ! त्वमेव प्रथमं सपत्राकुरु पोत्रिणम्।

अर्जुनः—( गाण्डीवमुद्दिश्य सकरुणं सास्रम् )

यत्ताण्डवव्यतिकरेण रणे मुहूर्त्तं नाद्दक्कबन्धशतताण्डवकेलिरासीत्।
गाण्डीव! तस्य भवतः किटिपाटनार्थमारोपयन्नपि गुणं व्यपरोपयामि ३२॥

( इति सज्जं करोति। निषङ्गतो बाणाकर्षणमभिनयन् )

कथं न निर्गच्छन्ति बाणाः?। किममी चिरव्यासङ्गगाढलग्ना, उत लज्जन्ते ऽनुचितकर्मणि?। ( कथंचिदाकृष्य निःश्वस्य ) अयि बाणाः!

उषितं साधु युष्माभिर्निषङ्गायामवाङ्मुखैः।
इदानीं हन्त! सन्धत्ते पार्थो वः पोत्रिपातने ॥ ३३ ॥

( इति सन्धत्ते )

( नेपथ्ये )

महाभाआ! इमाओ मा भाअह मा भाअह। एसो खु अम्ह सामी एक्कबाणेण वारेदि दुट्ठभूआरं। उव्वरिदो महामुणी।

---

१ महाभागाः! अस्मान्मा बिभीत मा बिभीत। एष खलु अस्माकं स्वामी एकबाणेन वारयति दुष्टभूदारम्। उद्धृतः महामुनिः।

अर्जुनः—( श्रुत्वा ससम्भ्रमम् ) कथमयं मत्तः किरातोऽग्रणीर्भविष्यति ? । ( इति कृतवेगो बाणमोक्षं नाटयति )

सिद्धा०—( विभाव्य साश्चर्यम् ) महाभाग ! पश्चाद्भूतस्ते बाणः । पश्य! पश्य!

स्पृष्टः कस्यापि दृष्ट्या नहि नहि विहरत्यन्तरे कुण्ठवेगो
मर्मच्छेदप्रवृत्तैरनुमितपतनस्तारचीत्कारभारैः ।
कस्याप्याकस्मिकोऽयं लयसमयमहामारुतस्येव पूरो
नाराचः····द्रागतनुतनुकुटीं चण्डशक्तिर्भिनक्ति ॥ ३४ ॥

अर्जुनः—( सवैलक्ष्यम् ) कथं विजयिनोऽपि ममायमविजयिबाणतां बाणः प्रपेदे यत्किरातशरेणापातिते पोत्रिणि पपात ? । भवतु न यावदितरः कोऽपि लक्षयति, तावदात्मबाणमानयामि । ( इत्युपसृत्य भूदारं विभाव्य साश्चर्यम् ) अहह ! न मयापि कदापि एवंविधविशालकायः कोलोऽवलोकितस्तत्किमेष मायामयः कोऽपि कौरवानुग्रहग्रहिल, उताहो स्वैराहारविहारपुष्टो वराह एव । भवत्वाददामि तावन्निजबाणम् । ( इति तथा करोति )

सिद्धा०—( निरूप्य ) महाभाग ! घातरन्ध्रमेवास्याङ्गे द्वितीयमवलोकयामि । तत्कारणं तत्प्रत्यभिज्ञाय· गृहाणात्मबाणम् । कदाचित्प्रहारदार्ढ्यादुल्बणोभयपार्श्वकृतरन्ध्रो भवद्बाण एव निर्गत्य क्वचिद्गतो भवेत् ।

अर्जुनः—सिद्धादेश ! अयमेव मे बाणो, न विकत्थनो मिथ्या व्याहरिष्यामि ।

सिद्धा०—नैष तर्हि किरातमात्रं, महानयं कोऽपि यस्य पत्री पातितपोत्री कुत्र गत इति न ज्ञायते ।

अर्जुनः—( सवितर्कम् ) न खलु निजबाणं गृहीत्वा किरातो गतो भवेत् ।

सिद्धा०—प्रतिपालय तर्हि मुहूर्त्तम् । किमिह कोऽप्याधावति ।

पुरुषः—( प्रविश्य पुरोऽवलोक्य ) कधं एस सो मुणी ! । ( ससम्भ्रममुपसृत्य ) अयि मुणिंद ! ण तुमं एदिणा दुट्ठभूआरेण किरादवाहिणीसबाणघाअवेअणामोहक्कअझंपेण कहिंपि पीडिदो ।

---

१ कथमेष स मुनिः । अयि मुनीन्द्र ! न त्वमेतेन दुष्टभूदारेण किरातवाहिनीशबाणघातवेदनामोहकृतझम्पेन कुत्रापि पीडितः ।

( अर्जुनः सावज्ञं सस्मितमवलोकते )

**कण्ठीरवः**— ( साक्षेपम् ) रे रे गोमाउआ ! कीस अणुचिदं मन्तेसि । णं मुणिंदेणं येव सम्मुहमुपसप्पन्तो एस दुट्ठकोलो वावादिदो । किण्ण [illegible]क्खसि लोहिअलित्तं हत्थे सेरं ।

**गोमायुकः**—( स्वगतम् ) अच्छरियं ! अच्छरियं ! । अ[illegible] कोवि एस कोअंडमंडिदो मुणी । ( प्रकाशं सप्रत्यभिज्ञमिव ) अयि वीरमुणिंद [illegible] सो अम्ह सामिणो सरो ।

**अर्जुनः**—सखे सिद्धादेश ! कष्टं कष्टम् ।

पत्री मदीयो विधिवैपरीत्यात्क्रूरं कलङ्कद्वयमद्य लेभे ।
व्यापारितो यत्किटिकीटघाते ममेति यच्चाह हहा ! किरा[illegible] । ३५ ॥

**गोमा०**—मुणिवीर ! तणुलदाए तणुअत्तणमेत्तफलं तुअ [illegible] संवुत्तं, जं एव्वं अकअण्णुओसि, जं एव्वं परवत्थुलोहिओसि । एसो खु मग्ग[illegible] तुह परित्ताणपराअणेण अम्ह सामिणा इमम्मि दुव्विसहवराहम्मि मुक्को [illegible] संपइ तुमं अवमिच्चुमुहादो उव्वरिदो । फुल्लंतगल्लो जंपेसु जं पडिहाअ[illegible] ण हु अम्ह सामी तुमं णिअकित्तिक्खंभं भंजयिस्सदि[3] ।

**कण्ठीरवः**—( साक्षेपम् ) रे रे सद्दूलअ ! अम्हाणं एस कलंको [illegible]ं अम्ह पुरदो गोमाउओ भअं वग्गदि[4] ।

**गोमा०**—( सावज्ञहासम् ) रे रे कंठीरव ! रे रे सद्दूलअ ! तु[illegible]ह्माणं किं किं अगोअरो अम्ह वाहिणीसबाणाणं पसरो[5] । ( साकूतमिव ) अहह ण एस सूअरो

---

१ रे रे गोमायुक ! कथमनुचितं मन्त्रयसे ! ननु मुनीन्द्रेणैव सम्मुखमुपसर्पमाण एष दुष्टकोलो व्यापादितः । किं न प्रेक्षसे हस्ते लोहितलिप्तं शरम् ? ।

२ आश्चर्यमाश्चर्यम् । अपूर्वः कोऽपि कोदण्डमण्डितो मुनिः । अयि वीरमुनीन्द्र ! स अस्माकं स्वामिनः शरः ।

३ मुनिवीर ! तनुलतायास्तनुत्वमात्रफलं तव तपः संवृत्तं यदेवमकृतज्ञोऽसि, यदेवं परवस्तुलोभितोऽसि । एष खलु मार्गणस्तव परित्राणपरायणेन अस्माकं स्वामिना दुर्विषहवराहे मुक्तः । सम्प्रति त्वमपमृत्युमुखादुद्वृत्तः । फुल्लद्गल्लो जल्प यत्प्रतिभाति ! न खलु अस्माकं स्वामी त्वया निजकीर्त्तिस्तम्भं भञ्जयिष्यति ।

( ४ ) रे रे शार्दूलक ! अस्माकमेष कलङ्को यदस्माकं पुरतो गोमायुको भयं वल्गति ।

( ५ ) रे रे कण्ठीरव ! रे रे शार्दूलक ! युष्माकं किं किमगोचरोऽस्मद्वाहिनीशबाणानां प्रसरः ।

पसू, सो य्येव पसू जो एआरिसं पि किरादचक्कवट्टिं विसिहलीलातिसायिद-मवलोकअन्तो ण अत्ताणं जाणेदि।

अर्जुनः—( सावज्ञम् )

मांसं मुहुर्वनमहीषु गवेषयन्ति
तज्जीवनैकशरणाः शबराः किराताः।
तेषां वराहमृगरोहिषखड्गरङ्कु—
न्यङ्कुच्छिदासु कतमोऽयमहो प्रकर्षः॥ ३६॥

गोमा०—( ससम्भ्रमम् ) महाभाअ! णिहुअं जंपेसु। इहय्येव महावण-तिरोहिदो मा सुणादु वाहिणीणाहो[1]।

अर्जुनः—( साक्षेपम् ) यदि श्रोष्यति तत्किम्?।

सिद्धा०—आगमिष्यति।

अर्जुनः—यद्यागमिष्यति तत्किम्?।

सिद्धा०—पार्थ! आगत्य त्वदीयशरशरव्यः परासुर्मा भूदिति गोमायुः स्वामिभक्तः शङ्कते।

गोमा०—ण खु तुमं अहिदो मुणिंदस्स जं एअं मन्तेसि[2]।

( अर्जुनः उच्चैःकारं मांसं मुहुर्वनमहीष्वित्यादि पठति )

( नेपथ्ये कलकलः )

सिद्धा०—( आकर्ण्य भयाभिनयं कृत्वा )। पार्थ! त्वद्वचनश्रवणानुपदमेव प्रवृत्ता किरातानीकिनीति जाने। अहह!

ससंरम्भन्यासस्फुरदुरुवैरंग्रिपतनैः
कठोरज्यावल्लीपरुषतरटङ्कारपटलैः।
प्रसर्प्पद्दोर्दर्पप्रबलगलगर्जापरिकरैः
किराताः साशङ्कं सुरसदनमप्याशु दधते॥ ३७॥
( सातङ्कमिव ) तत्कथमधुना भविष्यति?।

---

अहह नैष सूकरः पशुः, स एव पशुः य एतादृशमपि किरातचक्रवर्तिनं विशिखलीलातिशायितमवलोकयन् नात्मानं जानाति।

१ महाभाग! निभृतं जल्प। इहैव महावनतिरोहितो मा शृणोतु वाहिनीनाथः।

२ न खलु त्वमहितो मुनीन्द्रस्य यदेवं मन्त्रयसि।

अर्जुनः—( सावज्ञं सोपहासम् ) सखे स्निग्धादेश !

भवेज्झम्पाटोपैर्यदि शलभकोलाहलभर—
स्ततः स्यात्का शङ्का हुतभुजि शिखाचक्रविषमे ।
क्षणादेवोदश्चत्यथ पृथुलदुर्गन्धशबल—
स्तदङ्गप्लोषोत्थश्चिमिति निनदः किं न कलुषः ॥ ३८ ॥

गोमायुः—( ससम्भ्रमम् ) मुणिंद वारिदो मए[1]। किं करेमि। आगदो दाणिं साहसी सो किरादो ।

( अर्जुनस्तदिदानीं पलाये इति विहस्याग्रतः पदानि ददाति )

हरकिरातः—( प्रविश्य ) गोमाउआ[2]......सअब्भुदो जीओ। कहिं सो मुणी? ।

गोमायुः—( सहासम् ) णाह ! एसो य्येव सो मुणीसरो[3] ।

हरकिरातः—( स्वगतं निरूप्य ) अहो माहात्म्यं क्षात्रस्य तेजसः ! ।

तथाहि—एकः करः कलयति स्फटिकाक्षमालां
घोरं धनुस्तदितरश्च बिभर्त्ति हस्तः ।
धर्मः कठोरकलिकालकदर्थ्यमानः
सत्क्षत्रियस्य शरणं किमिवानुयातः ॥ ३९ ॥

अर्जुनः—( किरातमालोक्य स्वगतं साश्चर्यम् ) अये नैष किरातमात्रं, देवतापरिगृहीतमिवैनमवलोकयामि । ( सवितर्कम् )

अयमिह मुनिसङ्गादद्रिशृङ्गे किरातः
क्वचिदपि किमु चक्रे चाक्षुषीं त्र्यक्षसेवाम् ।
उपचयपरतन्त्रा विक्रमोत्साहशक्ति-
र्नहि नहि महिमानं चान्द्रचूडं विना स्यात् ॥ ४० ॥

किरातः—गोमाउआ ! एसो य्येव अम्हाणं विक्कमुक्करिसमसहन्तो आसि[4] ? ।

गोमायुः—अथ किम् ? ।

---

१ मुनीन्द्र ! वारितो मया । किं करोमि । आगत इदानीं साहसी स किरातः ।
२ गोमायुक ! ...... । कुत्र स मुनिः ? ।
३ नाथ ! एष एव स मुनीश्वरः ।
४ गोमायुक ! एष एवास्माकं विक्रमोत्कर्षमसहमान आसीत् ? ।

**हरकिरातः**—( साक्षेपं पार्थमुद्दिश्य ) रे रे उअसप्प उअसप्प[1] ।

जं दुल्लहं दुक्करदुक्करेहिं तवेहिं वित्थारिदताणवेहिं ।
मुणिंद ! तत्ते कअकम्मणासं बाणेण ! णिव्वाणमहं दइस्सं ॥ ४१ ॥

**अर्जुनः**—( सोपहासम् )

आ प्रत्यूषप्रदोषं विपिनविहरणैरामिषाहारकारः
प्रालेयस्यन्दकल्पं परिपिबसि मुहुर्नैर्झरं स्वच्छमम्भः ।
धिक्त्वां धिक्त्वां किरात ! क्षिपसि किमु पदं वर्त्मनि क्षत्रियाणां
प्राणप्रेमानपेक्षो नहि नहि भवति त्वादृशामेष योग्यः ॥ ४२ ॥

**हरकिरातः**—( स्वगतं साशङ्कम् ) अये ! एकः पार्थः, प्रभूता किरातानीकिनी । तत्प्रकारान्तरेणास्य करोमि जीवरक्षाम् । ( प्रकाशम् ) अयि मुणिवीर ! ण सुदाइं मए तुह भणिदाइं किरादकलअलेण । ता वारेमि दाव एदे । रे रे चपला किरादा ! एसो किं वीरधम्मो जं तुम्हे गणणाबाहिरा, एसो अ एक्को मुणिवीरो । ता ओसक्कध ओसक्कध[2] ।

**अर्जुनः**—( सोल्लुण्ठम् ) अयि किरातवीर ! दत्तं तावत्त्वया वैरफलम् । यतः—

तपःप्रसङ्गाद्गतसङ्गराणामुपोषितानां मम सायकानाम् ।
किरातरक्त········यमुपस्थिता किं क्रियते सुतुच्छा ॥ ४३ ॥

**सिद्धा०**—( ससम्भ्रमम् ) पार्थ ! पार्थ ! कथं वर्षन्त्येव त्वयि शरासारमवधीरितनिजाधीशशासनाः किराताधमाः ।

( अर्जुनः बाणमोक्षं नाटयति )

**सिद्धा०**—( सहर्षाश्चर्यम् ) अयि वीरशिरोमणे ! पश्य ! पश्य ! निजबाणवेगवैभवस्य फलम् ।

साटोपं श्रवणान्त········कृष्य मौर्वीलतां
ये मुक्ता रिपुभिः प्रदीपितदिशः प्रारब्धघोरारवाः ।

---

१ रे रे उपसर्प उपसर्प ।
यद्दुर्लभं दुष्करदुष्करैः तपोभिर्विस्तारिततानवैः ।
मुनीन्द्र ! तत्ते कृतकर्मनाशं बाणेण निर्वाणमहं दास्ये ॥ ४१ ॥

२ अयि मुनिवीर ! न श्रुतानि मया तव भणितानि किरातकलकलेन, तद्वारयामि तावदेतान् । रे रे चपलाः किराताः ! एष किं वीरधर्मः यद्यूयं गणनाबाह्या, एष च एकः मुनिवीरः । तदपसरत अपसरत ।

कृत्तैरर्द्धपथे त्वया रयवशाद्व्यावृत्य सम्पातिभि—
स्तैरेवार्धशरैः किरातपृतनावृन्देऽत्र वैरायितम् ॥ ४४ ॥

हरकिरातः—( विवृत्यावलोक्य स्वगतम् ) कथमतिक्रान्तं किरातैः ! । पार्थेनैव कृता निजा रक्षा । ( प्रकाशम् ) दिट्ठिआ खु मुक्कं चावलं किरादेहिं । उवरदो कोलाहलो[1] ।

कण्ठीरवः—( सोपहासम् ) उवरदं दाव किरादेहिं येव । संपइ ताणं कलअलो कअन्तणअरे वट्टदि[2] ।

( हरकिरातः ससम्भ्रममवलोकते )

अर्जुनः—( सोपहासम् )

मा बिभेतु महाभागो मया बाणपरम्परा इमा दूरीकृताः ।

हरकिरातः—मुणिवीर ! दिण्णा मए तुह पाणभिक्खा । करेदु भवं सरभसं मइ णिअसराइं अक्खदाइं[3] ।

अर्जुनः—( साक्षेपं सगर्वम् ) रे रे किरात !

शाकुन्तान्वयजा वयं नहि नहि व्यापारयामः शरा-
न्सर्वत्रैव रणानभिज्ञमनसां वार्त्तैव का त्वादृशाम् ।
त्वामावर्त्तयतेऽथ किं मम धनुर्विद्यादिदृक्षारस-
स्तत्पश्याद्रिशिलाविपाटनकलां मा यातु ते जीवितम् ॥ ४५ ॥
विशेषतश्च द्रावयति मां मुनिभावाद्द्विगुणाविर्भावः करुणारसः ।

हरकिरातः—( सोपहासम् ) किं भण्णइ । दिट्ठं येव तुअ कोअंडविज्जामाहप्पं, जेण तुमं णियकज्जाइं साहिदुं अपहुप्पमाणो तवस्सीकओ[4] ।

अर्जुनः—( सक्रोधम् ) सर्वतः कनिष्ठ मिथ्यागरिष्ठ !

त्वामेकबाणव्ययहेलयैव किरात ! कर्त्तास्मि कृतान्तवश्यम् ।
हृदि स्थितस्याद्यधनुर्द्धरस्य पिनाकपाणेः परमस्ति लज्जा ॥ ४६ ॥

---

१ दिष्ट्या खलु मुक्तं चापलं किरातैः । उपरतः कोलाहलः ।

२ उपरतं तावत्किरातैरेव । सम्प्रति तेषां कलकलः कृतान्तनगरे वर्तते ।

३ मुनिवीर ! दत्ता मया तव प्राणभिक्षा । करोतु भवान् सरभसं मयि निजशरानक्षतान् ।

४ किं भण्यते । दृष्टमेव तव कोदण्डविद्यामाहात्म्यं, येन त्वं निजकार्याणि साधयितुमप्रभवन् तपस्वीकृतः ।

हरकिरातः—( सोल्लासहासम् ) अहो मे कम्मलाहवं संवुत्तं, जं तुह हिअए बाणभिन्ने तुमं तुह गुरू अ वावादिदो भविस्सदि[1] ( इति बाणं क्षिपति )।

कण्ठीरवः—( अन्तरे भूत्वा बाणं पतन्तमादाय ) रे रे ण अत्ताणं मुणेसि, णेयं मुणिंदं मुणेसि[2]।

हरकिरातः—( सक्रोधम् ) रे रे सद्दुलअ ! कधं तुमं ण वारेसि कंठीरअं ? णादिवराहपरम्मुहो हं। तेण एअं वग्गीअदि, ता संपइ तं पि करिस्सं[3]।

शार्दूलकण्ठीरवौ—( साक्षेपम् ) एहि एहि एवं.... ।

हरकिरातः—( स्वगतम् ) कथं सावज्ञः पार्थो न प्रकाशयति मयि पौरुषम् !। नचाविज्ञातपौरुषनिकषाय देयमिदं महास्त्रम्। तदहं दुर्योधनरूपमास्थाय परीक्षे पौरुषमस्य। ( इति दुर्योधनरूपं नाटयति )

सिद्धा०—( विभाव्य साश्चर्यम् ) महाभाग पार्थ ! पश्य पश्य कोप्ययमन्य एव संवृत्तः।

अर्जुनः—( स्वगतं सक्रोधम् ) आः कथमयं दुरात्मा कुरुवंशपांसनः !। किं कुतोऽपि राक्षसादेः शिक्षितमायाक्रमः किरातवेषच्छद्मना दुर्योधनो मां द्रष्टुमायातः ?। तत्किमत्रोचितम् !। अथवा तां महाराजकृतां मर्यादामप्यतिलङ्घयिष्ये, नत्वेनं वधप्राप्तमिदानीमुपेक्षिष्ये। ( प्रकाशं सोपहासम् ) रे रे कुरुकुलकलङ्क !

दुर्योधन ! भवानेव जानात्युचितमात्मनः।
यत्पातकमयं रूपं कैरातमुररीकृतम् ॥ ४७ ॥

हरदुर्योधनः—( साक्षेपम् ) रे मध्यमपाण्डव ! क्व गतं तव गाण्डीवकोदण्डपाण्डित्यम् ?। सम्प्रति तपस्वितया राज्यमभिलषसे।

अर्जुनः—( साक्षेपम् )

रे रे दुर्मद कौरव !........क्षीण एकोऽस्म्यहं
तास्ताः सत्वरमानय क्षितिभृतामक्षौहिणीर्दुःसहाः।

---

१ अहो मे कर्मलाघवं संवृत्तं, यत्तव हृदये बाणभिन्ने त्वं तव गुरुश्च व्यापादितो भविष्यति।

२ रे रे आत्मानं न जानासि, नैनं मुनीन्द्रं जानासि।

३ रे ! रे ! शार्दूलक ! कथं त्वं न वारयसि कण्ठीरवम्। नादिवराहपराङ्मुखोऽहम्। तेनैवं वल्गयते, तत्सम्प्रति तमपि करिष्ये।

भीष्मद्रोणकृपाङ्गराजशकुनिप्रायैः सहायैर्वृतः
कृत्वा मन्क······ विधेहि सुदृढं राज्यं विमार्गार्जितम् ॥ ४८ ॥

अथवा । अहमिहैकस्त्वमिहैकः । गृहाण चापामनः ।

एको गुरुः कुरुकुले खुरली न भिन्ना भिन्नं कुलं न च······ जन्मभूमिः ।
भद्र प्रकाशय शरासनबाहुसारं साम्येऽपि वीर! भवतो विजयं ददामि ॥४९॥

हरदुर्योधनः—( साक्षेपम् )

एतां विसर्जय जटास्त्य··········
·····क्षपत्रवलयं कुरु वीरमुद्राम् ।
दुर्योधनो नहि तपस्विकृते कदापि
मज्जं करिष्यति धनुर्जगदेकवीरः ॥ ५० ॥

अर्जुनः—( सक्रोधम् ) आः किरात! कथमेवं मां विचिकित्ससि ? ।

संहारकारो जगतां स एव त्रिशूलपाणिर्गिरिशस्तपस्वी ।
तद्रौद्रभावानुगृहीतबाहुर्दोहं करिष्याम्यह·········· ॥ ५१ ॥

हरदुर्योधनः—रे रे द्रौपदीदयित ! दूरीकुरु दुराशामिमां मयि कापुरुष ! । तदानीं जनकार्जितं राज्यमपि न रक्षितवानसि । कथमिदानीं विकत्थनो नापत्रपसे ।

अयि हरिसुत ! धन्यास्तेऽपि ताणाः पुमांस-
स्तृणघटितपृथषत्केष्वासमुद्राभवन्तः ।
जनितपृथुभयानां क्षे················जा-
मभिभवति कुरङ्गानङ्गरेखैव येषाम् ॥ ५२ ॥

अर्जुनः—( विहस्य सोल्लुण्ठम् ) अयि सुयोधन ! लज्जावहैवास्माकं विकत्थनता त्वदग्रे ।

येन त्वया कृताद·····त्कारेण पश्यताम् ।
अस्माकं राज्यमाच्छिद्य गृहीतम्

हरदुर्योधनः—( सक्रोधम् ) आः फाल्गुन ! उपहससि माम् । तदानीं दुरोदरेणापकृतम्, अधुना समरसंमर्दैन कुरु सजीवं निर्जीवं गाण्डीवम् । ( इति चापमास्फालयति )

अर्जुनः—अद्भुतमद्भुतम् ।

प्रसवसमय एव क्रोष्टुवत्क्रोशनस्त्वं न........हं व्यक्तिमेतामकार्षीः।
कथमधिगतधाष्टर्यो भाषसे युद्धहेतोरपरमिव विशङ्के त्वां न दुर्योधनोऽसि ॥५३॥

हरदुर्योधनः—( स्वगतम् ) आः ! खलु ज्ञातोऽस्मि । भवत्वेवं तावत्। ( प्रकाशं सावज्ञं विहस्य ) पार्थ ! पार्थ ! तथ्यमेवैतत्।

यौधिष्ठिरे यन्निजवस्तुकोशे दुर्योधनोऽन्यः विहिताऽधिकारः।
प्रवासयन्पाण्डुसुतान्वनान्ते दुर्योधनोऽहं पुनरन्य एव ॥ ५४ ॥

तद्दर्शय शरासारशौण्डत्वम्।

अर्जुनः—( सावज्ञम् ) अयि सुयोधन ! मसृणोऽसि धनुर्वेदविद्यायाम्, उद्धुरोऽसि गदाविद्यायाम्। तद्गृहाण गदावत्कृत्वा गदाभावे कोदण्डम्। अहमपि तथा तथा करिष्ये। एहि विमर्दक्ष .... ।

( उभौ तथा कुरुतः )

कण्ठीरवः—( सकौतुकम् ) [१]सद्दूलअ ! पेच्छ पेच्छ घडिदा दुवे वि महावीरा कोअंदंडसंगरम्मि।

शार्दूलः—( साश्चर्यचमत्कारम् ) [२]कण्ठीरव ! पेच्छ पेच्छ दोन्ह वि हत्थलाघवं। अहो ! पाअलाहवं, जं कोअंडणिम्मिदपंजरब्भंतरट्ठिदव्व दुवेवि दीसन्ति।

सिद्धा०—आः ! पश्यत पश्यत।

कौरव्यं..........धनुषा मौलौ मघोनः सुतः

( साश्चर्यं ससम्भ्रमम् )

सम्प्राप्तावसरेऽत्र हन्त ! रुधिरे बालेन्दुरभ्युद्यतः।

( सहर्षम् )

हंहो ! पश्यत पश्यतेशमुनयः साक्षाद्भवानीपति-
र्भासां पूरमनश्वरं परिकिरन्सानन्दमुज्जृम्भते ॥ ५५ ॥

( सर्वे सहर्षाश्चर्यमालोकन्ते, अर्जुनः शङ्करमालोक्य ससम्भ्रमं नमस्ते नमस्ते इति साष्टाङ्गमवनौ निपतति )

---

१ शार्दूलक ! प्रेक्षस्व प्रेक्षस्व। घटितौ द्वावपि महावीरौ कोदण्डदण्डसङ्गरे।

२ कण्ठीरव ! प्रेक्षस्व प्रेक्षस्व द्वयोरपि हस्तलाघवम्। अहो ! पादलाघवं यत्कोदण्डनिर्मितपञ्जराभ्यन्तरस्थिताविव द्वावपि दृश्येते।

शङ्करः—( सहर्षोल्लासम् ) वत्स वत्स धनञ्जय ! उत्तिष्ठोत्तिष्ठ ।

अर्जुनः—( सहसोत्थाय शिरसि बद्धाञ्जलिः ) भगवन् पीयूषमयग्न[illegible]कर ! नमस्ते नमस्ते ।

भवसि सुकृतपाकैः स्तेनकस्यापि साक्षा-
न्नहि नहि तव रूपाणामीशो[illegible]स्ति कश्चित् ।
किमिति निकृतिमेनां नाथ ! कृत्वा विचित्रां
क्षणमनुचितकारः सेवको वञ्चितोऽहम् ॥ ५६ ॥

शङ्करः—( सप्रमोदं विहस्य ) वत्स पार्थ ! नाविज्ञातपौरुषनिकषाय महास्त्रमिदं प्रदेयमित्येष त्वद्विक्रमपरीक्षोपायः कृतः । सम्प्रति गृहाणैतन्महास्त्रम् । ( इति महास्त्रं दत्त्वाऽर्जुनस्य मूर्ध्नि हस्तं ददाति )

सिद्धा०—आश्चर्यमाश्चर्यम् ।

निर्गत्य नेत्रदुर्म्मित्रं ज्योतिः किमपि शङ्करात् ।
नीराजितककुप्चक्रमाक्रामत्यार्जुनं वपुः ॥ ५७ ॥

अर्जुनः—( सहर्षम् ) देव देव त्रिजगद्गुरो ! किं ते गुरुदक्षिणां ददामि ? ।

त्वां विश्वत्रयसर्गपालनलयव्यापारलीलामय
प्रीणीयां कतमेन भर्ग ! विधिना[illegible]सितं कामदम् ।
किंतु त्वद्गणप्रकरीविदृन्त्महोरमुण्डोत्कर-
प्रालम्बप्रतिकर्मसम्भृतिमहं सम्पादयिष्ये मुहुः ॥ ५८ ॥

शङ्करः—( सहर्षम् ) फलितमस्माकं महास्त्रप्रदानेन, यदेवं तावदाविर्भावसमनन्तरमेव वत्सः प्रकाममुत्सहते ।

धन्यो धनंजय ! पिता तव देवराजो धर्मोऽग्रजः प्रियसुहृत्पुरुषोत्तमस्य ।
एतां भुवं मम तनुं गुरुभारभुग्नां लघ्वीकरिष्यसि हतप्रवरप्रवीरः॥५९॥

अर्जुनः—( सप्रश्रयं विहस्य ) मम तनुं लघ्वीकरिष्यसीत्यनुचितमपि मयि करुणारसवशंवदाः समादिशन्ति पादास्तदेतत्प्रमाणम् ।

शङ्करः—( सपरितोषम् ) वत्स कपिध्वज ! कथय किं पुनस्तव प्रियमुपकरोमि ।

अर्जुनः—( सप्रश्रयं सपरितोषम् ) भगवन् जगन्नाथ! किमतः परं प्रार्थये भवन्तम् ।

अस्त्रज्योतिः.........नाथ! दत्तं त्वया मे
यत्प्रद्योतैः कुरुकुलतमः स्रस्तमद्यैव मन्ये ।
सम्पूर्णश्रीर्निखिलभुवनं पूरयन्हर्षपुरै-
रद्यैवासीत्प्रक.........सूनुर्दिनेशः ॥ ६० ॥

तथापीदमस्तु—

पर्जन्यो वृष्टिमिष्टां वितरतु करुणावारिणा पूर्यमाणो
न्यायोपायप्रवृत्ता अवनिमवनिपाः पालयन्तु प्रसक्ताः ।
मोहध्वान्तप्रणाशं मनसि च महतां शङ्कराद्वैतमास्तां
वाक्पीयूषप्रपाभिस्त्रिभुवनमनिशं मोदयन्तां कवीन्द्राः ॥ ६१ ॥

इति श्रीकिरातार्जुनीयो नाम व्यायोगः

कविवत्सराजविरचितः समाप्तः ।

महामात्यवत्सराजविरचितरूपकसङ्ग्रहे

# कर्पूरचरितभाणः

दास्येऽहं परिरम्भणानि कितव ! द्यूते जितानि त्वया
मिथ्यौत्सुक्यमिदं यतः शतमहोरात्रास्तदीयाऽवधिः ।
इत्युक्तः शिवया निशादिवसकृज्ज्योतिर्मयाक्षिद्वय-
द्रागुन्मेषनिमेषकोटिघटनव्यग्रो हरः पातु वः ॥ १ ॥

अपि च—

स्मेराः काक्षशतैर्निवार्य निभृतं चातुर्यधुर्याः सखीः
सारिं सारयतो मृषा गणयतः स्थानान्यतिक्रामतः ।
कण्ठाश्लेषपणे दुरोदरविधौ चन्द्रार्द्धचूडामणे-
र्देवीं वञ्चयतो जयन्ति गहनच्छद्मक्रमाः केलयः ॥ २ ॥

( नान्द्यन्ते )

**सूत्रधारः**—( सहर्षम् ) अये ! अद्य किल नीलकण्ठयात्रामहोत्सवसमागतै-र्विदग्धसामाजिकैः कालञ्जरपतेर्महाराजश्रीपरमर्द्दिदेवस्यामात्येन कविना वत्स-राजेन विरचितं कर्पूरचरिताभिधानं भाणमभिनेतुमादिष्टोऽस्मि । यस्यैकपात्र-प्रयोज्यस्याभिनये सुशिक्षितो मे कनीयान् भ्राता । पूर्वरङ्गमङ्गलमात्र एव ममो-पयोगः । ( दिशोऽवलोक्य सहर्षम् ) अये ! प्राप्त एवायमभिनयोचितः स्वभावसुभगो विभातसमयः । सम्प्रति हि—

दम्पत्योः स्मरसङ्गरव्यतिकरे प्रारब्धसाहायक-
क्रीडाजागरणोत्सवेन रजनिप्रत्यन्तमासेदुषः ।
सिञ्जानैर्नृपवेश्मनिर्गतचलद्वाराङ्गनानूपुरैः
प्रत्यूषेऽपि न दीयते रतिपतेर्निद्रावकाशो मनाक् ॥ ३ ॥

अपि च—

आच्छिद्य सद्यः प्रतिनायकस्य
चन्द्रस्य मन्दप्रतिभस्य लक्ष्मीम् ।

तां शम्भलीं रात्रिमपास्य दूरे
धूर्त्तो रविर्यो गणिकामुपैति ॥ ४ ॥

( आकाशे कर्णं दत्वा ) मार्ष ! किमात्थ ? । आः किमेदं अणुचिदं मन्तीअदि । कहिं सुरासुरमहणिय्यमाणपाअफंसो भअवं सूरो । कहिं माआवंचिदसअलभुअणो धुत्तजणो ।[1]

( सभयम ) अलमलमुच्चैःकारमालापेन । किं न श्रुतं त्वया—

दिवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च ।
सञ्चरन्ति महाधूर्त्ता वटे वररुचिर्यथा ॥ ५ ॥

किमात्थ ? । किं मं भाएसि । णत्थि मे धुत्तादो भअं ।[2]

( नेपथ्ये )

आः क्षुद्र मिथ्यागरिष्ठ ! तिष्ठ तिष्ठ ।

उत्सङ्गे सिन्धुभर्तुर्वसति मधुरिपुर्गाढमाश्लिष्य लक्ष्मी-
मध्यास्ते वित्तनाथो निधिनिवहमुपादाय कैलासशैलम् ।
शक्रः कल्पद्रुमादीन्कनकशिखरिणोऽधित्यकासु न्यधासी-
द्धूर्त्तेभ्यस्त्रासमित्थं दधति दिविषदो मानवाः के वराकाः ॥ ६ ॥

सूत्र०—( श्रुत्वा ) अये ! कर्पूरको नाम धूर्त्तोऽयमितः क्रुद्धोऽभ्युपैति । तन्नेह युज्यते स्थातुम् ।

( इति निष्क्रान्तः )

प्रस्तावना

( ततः प्रविशति कर्पूरकः )

कर्पूरकः—( सक्रोधम ) अपि च । रे मार्ष ! सकललोककामदुघां मायाविद्यां दूषयतः कथं न विदीर्णं रसनया भवतः ? । पश्य रे पश्य !

कथमकृत रघूणामग्रणीर्वालिभङ्गं
कथमगमदहल्यामग्नितुल्यां बिडौजाः ।
बलिदमनमकार्षीच्चक्रपाणिः कथं वा
न भवति यदि माया निष्पिधानं पिधानम् ॥ ७ ॥

---

१ आः किमेतदनुचितं मन्त्र्यते । कुत्र सुरासुरमहनीयपादस्पर्शो भगवान् सूरः । कुत्र मायावञ्चितसकलभुवनो धूर्त्तजनः ।

२ किं मां भापयसे ? । नास्ति मे धूर्ताद्भयम् ।

अथवा। अलं मे खलालापसमाधाननिर्बन्धेन। तदहमिदानीमजितार्थतीर्थप्रतिपादनाय दुरोदरशालामेव व्रजामि।

यतः—

द्यूतक्रीडाविहीनस्य वेश्यासु विमुखस्य च।
विद्यमानमपि व्यक्तं धनं स्वप्नधनोपमम् ॥ ८ ॥

( आकाशे )

वयस्य चन्दनक! तिष्ठ तिष्ठ। मामपि प्रतिपालय। किमात्थ?। सत्तट्ठवासराइं दुरोदरविरहिणो ण तुह मुहं पुलोईअदि[1]। ( सस्मितम् ) अलं मे वित्तशून्यस्य दोषोद्भावनेन। वित्तशाठ्यं हि क्रमातिक्रमे गर्हितम्। किं ब्रवीषि?। विलासवदीदिन्नहिअअस्स ण किंपि ते पडिहाअदि[2]। ( विहस्य ) विदितोऽस्मि वयस्येन। एवमेवैतत्।

अहरहरनुभूता अप्यपूर्वायमाणा
निरुपधिमधुरास्ताः सुभ्रुवः प्रेमलीलाः।
कृतनिबिडसमाधिर्भावयन्नन्तरात्मा
परिशिथिलितवृत्तिर्वर्त्ततेऽन्यक्रियासु ॥ ९ ॥

( इति स्थित एव पठति )

( आकाशे कर्णं दत्वा )

एवं मे वयस्यो ब्रवीति। सुट्ठु खु मे कोऊहल्लं ताओप्पेम्मलीलाओ आअण्णिदुं, जाहिं सअलभुअणमोहणो तुमंपि मोहिदो[3]। ( सव्रीडस्मितम् ) कथयामि यदि न सुभगम्मन्यं मन्यते वयस्यः। एकदा मयि केलिकलहान्तरिते सुगुप्तं सौधपृष्ठावलग्ने अरतिभरनिरस्तनिद्रया तया गाथा पठिता। सेयमुत्कीर्णेव मनसि वर्त्तते।

अग्घइ ण तत्थ धुत्ते वावारो कोवि इअरदूईण[4]।
आणेसु सिविणए तं मा णिद्दे णिद्दया होहि ॥

( इत्यासीनस्तथा तथा अरतिं नाटयति )

---

१ सप्ताष्टवासराणि दुरोदरविरहिणो न तव मुखं प्रलोक्यते।
२ विलासवतीदत्तहृदयस्य न किमपि ते प्रतिभाति।
३ सुष्ठु खलु मे कुतूहलं ताः प्रेमलीला आकर्णयितुं, याभिः सकलभुवनमोहनस्त्वमपि मोहितः।
४ अर्हति न तत्र धूर्त्ते व्यापारः कोऽपि इतरदूतीनाम्।

( पुनराकाशे )

किं ब्रवीषि ? । किमेतां वीणामुत्सङ्गे धारयसि ? । सततमियं तदङ्कदुलालिता सेयं मां प्रीणाति । एतया किल सा भगवतीं भवानीमुपवीणयति । विपक्षपुरतोऽपिच्छलेन मद्गोत्राङ्कं गेयमुपगायति ( इति वीणां दर्शयति ) । किमात्थ ? । तं ज्जेव गेअं अत्तणो गाएसुं[1] । आकर्णयतु मे वयस्यः ।

रतिरमणप्रियसुहृदा शशाङ्कसुभगेन निर्वृतिकरेण ।
कर्पूरेण वियोगो भगवति रुद्राणि ! मा भवतु ॥ १० ॥

( इति वीणया बहुविधं गायति । ध्यानं नाटयित्वा सोरस्ताडं पाणिं विधूय )

किमात्थ ? । किं उण तुमं मउलाअन्तणेत्तो हिअअं ताडेसि, पाणिं धुणेसि[2] । ( सास्रं ) वयस्य !

सखीं कृत्वा युक्त्या स्फुटमदनुकारप्रणयिनीं
तया सार्द्धं द्यूतव्यतिकरमथारभ्य सुतनुः ।
मुहुर्जित्वा जित्वा दृढतरसमालिङ्गनपणं
प्रहृष्टा द्रष्टव्या पुनरपि मया गुप्तवपुषा ॥ ११ ॥

शान्तम् । अथवा मरणमेव तदनुस्मरणम् । ( क्षणं विचिन्त्य ऊर्ध्वमवलोक्य बाष्पं मुञ्चति )

( आकाशे )

किमात्थ ? । किं उण तुमं सहसच्चिअ बाहच्छोहपक्खराविलमुहो संवुत्तो[3] ? ।

वयस्य ! पश्यामीव पुरतस्तमद्य सौधशिखरं, यत्राहं प्रेमविग्रहानुतापपरवत्या चन्द्रातपोपढौकितया स्वयमेव तया प्रणयेन कृतार्थीकृतोऽस्मि । प्रथमं हि सा तत्र घनसारपरागपटलनिचुलितस्फटिकशिलाधिशायिनी सखीजनाभिमुख्येन मां श्रावयन्ती चन्द्रं प्रतीत्थमुक्तवती—

इहास्ति नूनं तुहिनांशुबिम्बे
कलङ्कधूमानुमितो हुताशः ।

---

आनय स्वप्ने तं मा निद्रे निर्दया भव ॥

१ तदेव गेयमात्मनो गाय ।

२ किं पुनः त्वं मुकुलायमाननेत्रो हृदयं ताडयसि पाणिं धुनोषि ? ।

३ किं पुनः त्वं सहसैव बाष्पक्षोभप्रक्षराविलमुखः संवृत्तः ? ।

अस्यांशुपूरः कथमन्यथाऽसौ
ज्वालावलीडम्बरमातनोति ॥ १२ ॥

ततोऽहं तदन्तिक एवानाकर्णितकेन स्थितः स्वयमेव तया विलुप्तव्रीड-मुत्थायावर्जितोऽस्मि ।

अन्योन्यं करताडनेन हसतु स्वच्छन्दमालीजन-
स्त्यक्ता मानकथा कृताऽञ्जलिरसावङ्गीकृतं लाघवम् ।
आगःशल्यपरम्पराः सुभग याश्चित्ते मम त्वत्कृताः
सर्वास्ताः शशिबिम्बचुम्बकशिलालोकेन दूरीकृताः ॥ १३ ॥

( नेपथ्याभिमुखमवलोक्य साशङ्कमाकाशे )

किं पुनर्विहसितमुखः प्रियवयस्यः ? । न खलु मामुपहसति भवान् । किमात्थ ? । जइ एरिसो कअत्थीकअकुसुमशरो परोप्परमणुराअबन्धो, ता कीस तुमं तिस्सा दूदीभविअ गहिदपाहुडो पडिभुअंगं मंजीरअमणुसंधिदुं गदोसि त्ति हासेण फुटिदोम्हि[1] । वयस्य एवं मा हास्यो वैदेशिकः । कार्याचार्यकथासु किन्न श्रुतं त्वया—

गर्वोर्मिभिरहार्याणां कार्यकौशलशालिनाम् ।
न्यक्कारोऽपि शुभोदर्कः स्पृहणीयः क्वचिद्भवेत् ॥ १४ ॥

तत्त्वां फलसम्पत्तिरेवाराधयिष्यति । ( आकाशे कर्णं दत्वा ) किमात्थ ? । सुट्ठु खु मे कोऊहल्लं, ता कधेसु मे वित्थरेण णिअदूअत्तणं[2] । आकर्णयतु मे वयस्यः । गतोऽहं मदनोद्याने पानगोष्ठीगतस्य मञ्जीरकस्य पार्श्वम् । ( इति हासं नाटयित्वा ) एवमाह भवान् । किं उण आरंभ एव हासेण विलुठदि भवं[3] ।

वयस्य ! तद्धेषचेष्टानुस्मरणेन हासपर्याकुलोऽस्मि । किमात्थ ? । ता मह पुरदो तं य्येव पअडेसु[4] ।

किं न कथयामि वयस्याय ? ।

वक्रो जूटः खल इव सदा कर्णदेशावलग्नः
क्षीणः कूर्चो भट इव मुहुर्लब्धलोहप्रसङ्गः ।

१ यदि एतादृशः कृतार्थीकृतकुसुमशरः परस्परमनुरागबन्धः तत्किं तस्या दूतीभूय गृहीतप्राभृतः प्रतिभुजङ्गं मञ्जीरकमनुसन्धितुं गतोऽसीति हासेन स्फुटितोऽस्मि ।

२ सुष्ठु खलु मे कौतूहलं तत्कथय मे विस्तरेण निजदूतत्वम् ।

३ किं पुन आरम्भ एव हासेन विलुण्ठति भवान् ।

४ तन्मम पुरतः तमेव प्रकटय ।

हस्ते शस्त्री भ्रमिशतकरी लासिकेव प्रगल्भा
वाक्संरोधी गद इव मुखे किञ्च ताम्बूलगोलः ॥ १५ ॥

अपि च—

उच्चैर्गाथापठनमशुभं श्रोत्रयोरात्मगीतं
हस्ताघातैरुरसि तरलैर्मौरजी वाद्यविद्या ।
भूयो भूयः कररुहपदोत्सङ्गिते दृष्टिरङ्गे
( इति तथा तथाऽभिनयं दर्शयित्वा )
कर्तुं शक्तः क इव यदि वा तस्य दुश्चेष्टितानि ॥ १६ ॥

विज्ञप्तश्चासौ मया कतिचित्पार्श्वस्थलटकसहचरश्लाघाभिरुत्कन्धरः ।

( सप्रश्रयम् ) आउत्त मंजीरअ ! पेसिदम्हि तुह सआसं अत्ताए कलावदीए । भणिदं च तीए[1] ।

पुत्र मञ्जीरक ! तावकीयं विलासवती, काहमस्याः कृपायाम् । किं नु त्वद्वियोगदहनेन विपन्नायामस्यां त्वमेको मे तनयः कलङ्ककलुषो भविष्यसीति वेपते मे हृदयम् । सम्प्रति हि—

हरहिमकरलेखादुर्बला देहवल्ली
श्वसितपवनयात्रामात्र एवोद्यमोऽपि ।
तव सुभग ! वियोगे विक्लवामित्थमेता-
मपि विरहविरोधी शोचते पञ्चबाणः ॥ १७ ॥

ततस्तेनोक्तम् । अस्त्येवमम्बाया हृदयं, विलासवत्यास्तु कर्पूरकासक्तचेतसः के वयम् । ततो मयाऽभिहितम् । णत्थि एवं णत्थि ।

ततः स मामभ्यधात् । भद्र ! नवागमनत्वादनभिज्ञो भवान् ।

अद्याम्बा कलहायिता सह मया कार्यं मयाद्य व्रतं
बाधन्तेऽद्य ममाङ्गकानि नृपतेर्नाट्ये नियोगोऽद्य मे ।
इत्थं मत्प्रतिषेधबद्धमनसस्तस्याः प्रभूतारुचेः
स्फूर्त्तिः कापि विजृम्भते नवनवव्याजोक्तियुक्तिक्रमे ॥ १८ ॥

अपि च—

मय्यारब्धकथे सखीजनमभिप्रस्तौति वार्त्तान्तरं
साकूतं कुरुते मुहुर्मम समस्याऽन्यस्य गर्हाग्रहम् ।

---

१ आर्यपुत्र मञ्जीरक ! प्रेषिताऽस्मि तव सकाशं अत्तया कलावत्या भणितं च तया ।

मद्विज्ञानकलासु कूणितमुखी मौनं समालम्बते
निद्रां नाटयते करोति च पुनर्व्यक्तिं पुराणागसाम् ॥ १९ ॥

किमाख्यातैः ? । व्यक्तमेव किं नादर्शि त्वया विलासवत्याः केलिगृहे कर्पूरकालेख्यं यत्रायमालिखितः श्लोकोऽस्ति—

वाचालत्वं पदालग्नो मञ्जीरः कुरुतां चिरात् ।
कर्पूर एव सर्वाङ्गसङ्गसौभाग्यभाजनम् ॥ २० ॥

तन्नामसाम्यप्रीत्या च शिशिरेऽपि कर्पूरेण सर्वाङ्गानि च्छुरयति । (कर्णं दत्वा) किमात्थ ? ।

अह्रो दे धन्नत्तणं जं पडिवक्खमुहादो णिअसोहग्गं णिसुणिदं । (व्रीडामभिनीय) प्रियवयस्य ! समग्रं तावदाकर्णय । ततस्तद्वचनमाकर्ण्य कर्णौ पिधायाभ्यधायि मया ।

कलहाइदो आउत्तो एवं जंपेदि। शिविणएवि ण एदं संभावीअदि। संपदं खु,[1]
सा राअभरिअहिअआ असरिसरूअस्स सअलसुअणम्मि ।
तुह विग्गहस्स विरदिं अहिलसइ अणण्णवावारा ॥

किमात्थ ? । किं तेण विण्णादं विवरीदत्थं तुह एदं वअणं[2] ? । (विहस्य) कुदो विण्णादं ? । अनेनैव वचनोपन्यासेन परितुष्टेन गृहीतं ताम्बूलचन्दननवीनांशुकादिप्राभृतकम् । उक्तोस्मि च सपरितोषम् । भद्र निपुणक ! गच्छ गच्छ तेनास्मदङ्गुलीयकाभिज्ञानेन ग्रहीष्यसि पारितोषिकमस्मद्गृहे दीनारसहस्रम् । वयमप्यागतप्राया एव । (नेपथ्याभिमुखमाकर्णनाभिनयं कृत्वा सपरितोषमाकाशे)

वयस्य चन्दनक ! आकर्णय आकर्णय एवमिहोद्घुष्यते । एवंविधबुद्धेरेवंविधमेव फलं युज्यते । यदनेन दग्धमञ्जीरकेण गणिकायाश्चन्द्रसेनायाः परिमुषितं वस्तु तत्किमेष त्वदीयचीनांशुकशृङ्गारितः सुव्यक्तं पर्यटति चत्वरेषु । तदिदानीमस्य राजकारागारकीलितस्य कः प्रतीकारः? । अर्थसञ्चयोऽप्यस्य केनापि छलकलिताङ्गुलीयकाभिमानेन सर्व एवापहृतः । किमात्थ ? । किं तए गणिआए चंदसेणाए परिमुसिऊण तं तए चीणंसुअं कवडपाहुडे मंजीरअस्स दिण्णं[3] ? ।

१ कलहायित आर्यपुत्र एवं जल्पति । स्वप्नेऽपि नैतत्सम्भाव्यते । सम्प्रति खलु
सा रागभृतहृदया असदृशरूपस्य सकलसुजने ।
तव विग्रहस्य विरतिमभिलषत्यनन्यव्यापारा ॥

२ किं तेन विज्ञातं विवृतार्थं तवैतद्वचनम् । कुतः विज्ञातम् ? ।

३ किं तस्या गणिकायाः चन्द्रसेनायाः परिमुष्य तत्त्वया चीनांशुकं कपटप्राभृते मञ्जीरकस्य दत्तम् ।

( सहर्षम् ) वयस्य ! अथ किम् ? । ( पुनराकाशे ) एवमाह भवान् ।

साहु वअस्स साहु । पाविदं मए तुह मित्तीए अद्धं फलं जं तए चंदसेणाए परिमुसिदं सव्वस्सं । अहं खु तीए हआसाए हारदत्तदिन्नहिअआए णिद्धणीकदोम्हि । तइआ उण समग्गं फलं भणिदव्वं जइआ हारदत्तो तए कहिंपि संकडे पाडिदव्वो ।[1]

वयस्य ! प्रतिपालय कियन्तमपि कालम् । तदपि फलिनप्रागयु । (पुनराकाशे) एवमाह भवान् ।

परमं खु एदं पहरिसट्ठाणं ता वित्थरेण णिवेदेहि । जहा तए चंदसेणा परिमुसिदत्ति ।[2]

आकर्णयतु मे वयस्यः । उपढौकितो मया हारदत्तहारस्तस्यै । उक्तं च । सामिणि दिट्ठिआ वड्ढसि । जिदं जूअम्मि सामिणा हारदत्तेण सअलजूदअरसव्वस्सं । अहं खु तुमं वद्धाविदुं पेसिदोम्हि ।[3] ततश्च सा—

किमयममृतवाप्यां स्नानकेलिप्रसङ्गो
घटयति किमु वृष्टिं माकरन्दीं वसन्तः ।
किमु समुपगताऽहं वैधवीं राजधानी-
मिति हृदि हरिणाक्षी हारमामुच्य मेने ॥ २१ ॥

प्रवृत्तश्च तद्गृहे हारदत्तागमन इव हारमात्रागमनेऽपि महोत्सवः । उक्तश्चास्मि तदम्बया मायावत्या । वत्स ! वत्स ! अम्हाणं खु अज्ज मइरापराहीणो परिअणो । एदं अम्ह सव्वस्सं तुह य्येव । ता अप्पमत्तेण भोदव्वं ।[4]

ततो मयाऽभ्यधायि ।

णत्थि एत्थ संदेहो । अप्पमत्तोय्येव चिट्ठामि[5] ।

---

१ साधु वयस्य साधु । प्राप्तं मया तव मैत्र्या अर्द्धं फलं यत्त्वया चन्द्रसेनायाः परिमुषितं सर्वस्वम् । अहं खलु तया हताशया हारदत्तदत्तहृदयया निर्धनीकृतोऽस्मि । तदा पुनः समग्रं फलं भणितव्यं यदा हारदत्तस्त्वया कुत्रापि संकटे पातितव्यः ।

२ परमं खलु एतत् प्रहर्षस्थानं, तद्विस्तरेण निवेदय यथा तेन चन्द्रसेना परिमुषितेति ।

३ स्वामिनि ! दिष्ट्या वर्धसे । जितं द्यूते स्वामिना हारदत्तेन सकलद्यूतकरसर्वस्वम् । अहं खलु त्वां वर्द्धापयितुं प्रेषितोऽस्मि ।

४ अस्माकं खलु अद्य मदिरापराधीनः परिजनः । एतदस्माकं सर्वस्वं तवैव । तदप्रमत्तेण भवितव्यम् ।

५ नास्त्यत्र सन्देहः, अप्रमत्त एव तिष्ठामि ।

अथाहं तद्गृहे मत्तसुप्तपरिजने अस्वामिक इव प्रकामं सर्वस्वमादायापक्रान्तोऽस्मि । ( पुनराकाशे )

वयस्य चन्दनक ! किमेवं कुप्यसि ? ।

कीस तए मह पडिवक्खस्स हारदत्तस्स पेसणं कदं[1] ।

प्रसीद प्रसीद । नहि नहि मया तत्प्रेष्येणैतदध्यवसितम् । आकर्णय आकर्णय । ( सोपहासम् ) जानात्येव तदा भवान् ।

ग्रन्थिच्छटाविकटजीर्णपटैकवित्तः
स्कन्धार्पितद्विगुणबाहुयुगोत्तरीयः ।
क्रोधोपभुक्तकठिनीधवलाधरश्री-
र्द्यूतप्रभोरहमभूवमतिप्रसादी ॥ २२ ॥

तादृग्विधचेष्टितश्चाहं गतो माणिभद्रस्यायतनम् । एवमात्थ ? । किं तुह जूदअरस्स माणिभद्देण[2] ? ।

वयस्य मैवम् ।

रूपान्तरं पुरारातेः प्रत्यर्थिदलनोद्धुरः ।
विनिद्रयति भद्राणि माणिभद्रः सदैव नः ॥ २३ ॥

उपालब्धश्च मया दौर्गत्योपतप्तेन भगवान्माणिभद्रः ।

पूजोपहारविनियोगपरम्पराभि-
रायासयन्ति च धनानि च संहरन्ति ।
आशामयं दृढमपि द्रढयन्ति पाशं
विश्वप्रलम्भनपरा हि सदैव देवाः ॥ २४ ॥

तन्ममार्पय प्रागर्पितपूजोपहारान् । माणिभद्र ! दृष्टा त्वया मदीया भक्तिः । अभक्तिरपीदानीं दृश्यताम् । इति परुषाक्षरमुदीर्य विश्रान्ते च मयि ( इत्यर्द्धोक्तौ दीर्घमुष्णं च निःश्वस्य वैक्लव्यं नाटयति )

( पुनराकाशे )

वयस्य चन्दनक ! किमात्थ ? । किं उणं तुमं य्येव एवं विह्लोसि[3] ।

---

१ कथं त्वया मम प्रतिपक्षस्य हारदत्तस्य प्रेषणं कृतम् ? ।

२ किं तव द्यूतकारस्य माणिभद्रेण ? ।

३ किं पुनस्त्वमेव एवं विह्वलोऽसि ?

वयस्य स्मरणमपि सुदारुणं तादृग्दशायाः । तथाहि—

निदानं रागाणामजनि रजनीपूर्वसमयो
जजृम्भे सा हृद्या मधुरमदिरागन्धलहरिः ।
उदीर्णा सा यूनां सहजसुभगा गीतसरणि-
र्ममासीदासन्नं यमनगरदौवारिकवचः ॥ २५ ॥

अथ पुरुषः सहर्षं कश्चिदभ्येत्य भगवन्तं माणिभद्रमभ्यधात् । भअवं माणिभद्द ! णमो दे । सअलोवि एस तुह पहावो जं मे सामी हारदत्तो जूअम्मि जअलच्छीवल्लहो । ता गेन्ह एदं पूओपहारं । अविअ । जइ मे कणिट्ठ-भादुओ णिउणओ देशान्तरपवासिदो आगमिस्सदि, ता एसो अहं चदुरओ सव्वस्सेण वि तुमं परितोसइस्सं[1] ।

इत्याकर्ण्य च मया भवितव्यमस्मादस्माकं कियताप्याधिसमाधानेनेति कृतनिश्चयेन स चतुरको निर्गच्छन्नुपलक्षितः ।

अथ स चतुरकः परिमलाहृतरोलम्बचक्रवालकृतनीलतिरस्करणीवि-भ्रमं विवेश शौण्डिकागारम् । अथ तदङ्गणाददूरतः स्थितेन प्रारेभे मया करुणस्वरं कपटशोकाभिनयः । यथा किल साहु भणिदं खु केण वि सुभादु-अरसण्णुएण एदं[2] ।

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥ २६ ॥

हद्धी हद्धी । अहो मे दुट्ठजीविदस्स सुदिढत्तणं, जं तारिसस्स सुभा-दुअस्स चदुरअस्स वि विरहेण ण णीहरदि[3] ।

अथ तेन मदालापसमुद्दीपितसमधिककरुणार्द्रहृदयेन ससम्भ्रममभ्येत्या-भिहितोऽस्मि ।

भद्द ण तुमं मह कणिट्ठभादुओ णिउणओ[4] ।

१ भगवन् माणिभद्र ! नमस्ते । सकलोऽपि एष तव प्रभावो यन्मे स्वामी हारदत्तः द्यूते जयल-क्ष्मीवल्लभः । तद्गृहाणैनं पूजोपहारम् । अपि च यदि मे कनिष्ठभ्राता निपुणको देशान्तरप्रवासित आगमिष्यति तदा एष अहं चतुरकः सर्वस्वेन त्वां परितोषयिष्यामि ।

२ साधु भणितं खलु केनापि सुभ्रातृकसञ्ज्ञकेन एतत् ।

३ हा धिक् ! हा धिक् । अहो ! मे दुष्टजीवितस्य सुदृढत्वं, यत्तादृशस्य सुभ्रातुः चतु-रकस्यापि विरहेण न निःसरति ।

४ भद्र ! न त्वं मम कनिष्ठभ्राता निपुणकः ।

अथ मया साश्रेण तूष्णीमेव स चरणयोर्गृहीतः। ततोऽहं तेन भ्रातृवियोगदुःखभरविजृम्भमाणताराक्रन्दितेन कण्ठे गृहीतोऽस्मि।

अथ मयाऽभ्यधायि।

मुंचदु मुंचदु मं अज्जो। अलिअभादुओ खु अहं। सइव्येव अज्जस्स दुक्खमुप्पादेमि[1]।

( पुनराकाशे )

एवं विहसति भवान्।

अहो दे अलिअणिउणअस्स वि वंकवअणम्मि सच्चं णिउणत्तणं[2]। वयस्य चन्दनक! किं वचनेन?। पश्य मे कार्ये एव नैपुणम्। शृणु तावदग्रतः। अथ स चतुरकेण समधिकारमहोत्सवेन शौण्डिकोऽभ्यधायि।

तुमं खु मे धम्मपिदा। देहि मे अवरं मइरं। माणइस्सं महूसवं। मिलिदो मे चिरपवासिदो कणिट्ठभादुओ णिउणओ। एदं खु हारदत्तपेसिदं हारं समप्पिअं जं चंदसेणाए सआसादो पाविस्सं तत्ते समप्पिस्सं[3]।

अथ मया जरदम्बरग्रन्थितः समुन्मोच्य समुपनीतं तस्य हिरण्यशकलम्। उक्तं च मया—

अय्य चदुरअ! गेन्ह एदं। मए खु तुह पहावेणं व्येव बहुदरं अज्जिदं। किं उण चौरावहारादो एदं व्येव उच्चरिदं। अथ तेनोक्तम्। वत्स! अणुचिदं खु एदं, कणिट्ठो तुमं। ततो मयाऽभ्यधायि। अय्य! किं एदं वत्थुदं। मए उण अज्जस्स पसाएण बहुदरं अज्जिदव्वं! अथ स तद्गृहीत्वा जग्राह भूयसीं मदिराम्। किमात्थ?। किं उण तए अट्ठाणे दविणवओ वकदो[4]। वयस्य मा भैषीः—

व्यभिचरति न दाहच्छेदकाषक्रियाभि-
र्जगदुपकृतिपात्रं जातरूपं तदन्यत्।

---

१ मुञ्चतु मुञ्चतु मामार्यः। अलीकभ्राता खल्वहम्। सदैव आर्यस्य दुःखमुत्पादयामि।

२ अहो ते अलीकनिपुणकस्यापि वक्रवदने सत्यं निपुणत्वम्।

३ त्वं खलु मे धर्मपिता। देहि मेऽपरां मदिराम्। मानयिष्ये मधूत्सवम्। मिलितो मे चिरप्रवासितः कनिष्ठभ्राता निपुणकः। एष खलु हारदत्तप्रेषितो हारः समर्पितः यश्चन्द्रसेनायाः सकाशात् प्राप्स्ये तत्ते समर्पयिष्ये।

४ आर्य चतुरक! गृहाणैतत्। मया खलु तव प्रभावेणैव बहुतरमर्जितम्। किं पुनः चौरापराधतः एतदेवोच्चरितम्। वत्स! अनुचितं खल्वेतत् कनिष्ठस्त्वम्। आर्य! किमेतद्वस्तुभूतम्। मया पुनः आर्यस्य प्रसादेन बहुतरमर्जितव्यम्। किं पुनः त्वया अस्थाने द्रविणव्ययः प्रकृतः।

कनकमिदमनीदृग्विश्वविश्वासघात-
प्रणयिगहनमायाजालजातात्मलाभम् ॥ २७ ॥

अथ स चतुरकः

निस्थामकरणग्रामः प्रकामं सीधुसेवया।
निद्रया मान्द्रया ग्रस्तः सन्निपातादिवापतत् ॥ २८ ॥

अहं च चषकचुम्बनमात्रपरो मदिरयाऽनभिभूतस्तदुत्सङ्गतो हारमादाय निष्क्रान्तोऽस्मि। ( नेपथ्याभिमुखं कलकलाकर्णनाभिनयं कृत्वा पुरोऽवलोक्य ससम्भ्रमम् )

( आक्रोशे )

विरोधक ! किमुद्भ्रान्तो धावसि?।

आपत्प्रशान्तिषु परा तव बुद्धिसिद्धि-
र्न त्रासलेशमपि तत्त्वयि सम्प्रतीमः।
क्वापि प्रमादपरवानसि चेत्तदेष
तत्रास्ति मे रिपुकुलान्तकरः कृपाणः ॥ २९ ॥

( आकर्णनाभिनयं कृत्वा ) किमात्थ ?।

णत्थि मे किम्पि भअं णत्थि। अहं खु चंदणअं वद्धाविदुं पहाविदोम्हि। एसो खु एदस्स पडिवक्खो हारदत्तो राअपुरिसेहिं णिगिहीदो णिव्वासीअदि। एअस्स किल भिच्चेण चदुरएण अलिअकणअदाणेण सोंडिओ वंचिदो। अवरेण अ णिउणएण हाराहिण्णाणदाणवंचिदाए चंदसेणाए सव्वस्सं परिमुसिअं। तुज्झवि सा पडिवक्खभूदा कुट्टणी कलावदी दुहिदाए विलासवदीए गणिआगणस्स पुरदो कअसवहणिब्बन्धं आजम्मं परिचत्ता।

( सहर्षम् ) वयस्य विरोधक ! दीर्घं जीव दीर्घं जीव।

पीयूषसिन्धुरजनिष्ट विनष्टनक्रः
प्रोच्छिन्नदुर्जनकथाऽजनि काव्यगोष्ठी।
जाताद्य चन्दनलता भुजगीवियुक्ता
यत्कुट्टनीविरहिता गणिका बभूव ॥ ३० ॥

---

१ नास्ति किमपि भयं नास्ति। अहं खलु चन्दनकं वर्धापयितुं प्रधावितोऽस्मि। एष खलु एतस्य प्रतिपक्षो हारदत्तो राजपुरुषैर्निगृहीतो निर्वास्यते। एतस्य किल भृत्येन चतुरकेण अलीककनकदानेन शौण्डिको वञ्चितः। अपरेण च निपुणकेन हाराभिज्ञानदानवञ्चितायाः चन्द्रसेनायाः सर्वस्वं परिमुषितम्। तवापि सा प्रतिपक्षभूता कुट्टिनी कलावती दुहित्रा विलासवत्या गणिकागणस्य पुरतः कृतशपथनिर्बन्धमाजन्म परित्यक्ता।

तत्कथय कथमिदं संवृत्तम्। (आकर्णनाभिनयं कृत्वा) एवमात्थ?। मेए खु पढमं भणिदा सुणिहुदं सा कलावदी। एसा खु तुह दुहिदा जूदअरकप्पूरम्मि विलग्गहिअआ तुह सव्वस्सं उक्खणिअ तस्स समप्पिस्सदि। तो तए अप्पमत्ताए भोदव्वं। पुणो अ मए विलासवदी एवं गहिदत्था कआ। जहा किर एसा तुह अन्तिआ कप्पूरअपक्खवादकारणेण विरत्ता तुह सव्वस्सं उक्खणिअ कहिंपि गमिस्सदि। ता अज्ज रअणीए णिक्खिदव्वा तए एसा। तदो जामिणीए पढमजामम्मि कलावदी दविणट्ठाणमुक्खणन्ती विलासवदीए सकेसग्गहं कलहाविदा णिव्वासिदा अ।

(सहर्षमाकाशे)

वयस्य चन्दनक! पश्य पश्य भगवतो माणिभद्रस्य प्रसादमहिमानम्। त्रिचैरेव दिनैः कृतकृत्याः स्मः।

(पुनराकाशे आकर्णनाभिनयं कृत्वा साश्चर्यम्)

एवमाकाशवाणी श्रूयते। वत्स कर्पूरक! न तथा त्वद्भक्त्या परितुष्टोऽस्मि यथा तद्दिने रोषगर्भैरुपालम्भैः। तत्किं ते भूयः प्रियमुपकरोमि। (साश्चर्यहर्षमाकाशे प्रणम्य) भगवन्प्रसीद प्रसीद क्षमस्व दुर्विनयम्। एष पुनः पुनः प्रणतोऽस्मि।

विपत्पयोधौ निहिता विपक्षाः पूर्णाः प्रकामं कनकैर्निकायाः।
शान्तोऽन्तरायः प्रमदासुखानामभ्यर्थये तत्किमहं कृतार्थः॥ ३१॥

तथापीदमस्तु—

लोकः सदा नन्दतु पूर्णकामश्चन्द्रार्द्धचूडे निबिडानुरागः।
वर्षन्तु कामं सलिलं पयोदाः कृपार्द्रचित्ताः कनकं नरेन्द्राः॥ ३२॥

समाप्तोऽयं कर्पूरचरिताभिधानो भाणः।
कृतिरियं महाकवेर्वत्सराजस्य।

---

१ मया खलु प्रथमं भणिता सुनिभृतं कलावती। एषा खलु तव दुहिता द्यूतकरकर्पूरके विलग्नहृदया तव सर्वस्वमुत्खाय तस्य समर्पयिष्यति। त्वया अप्रमत्तेन भवितव्यम्। पुनश्च मया विलासवती एवं गृहीतार्था कृता। यथा किल एषा तव माता कर्पूरकपक्षपातकारणेण विरक्ता तव सर्वस्वमुत्खाय कुत्रापि गमिष्यति। तदद्य रजन्यां निरीक्षितव्या त्वया एषा। ततो यामिन्याः प्रथमयामे कलावती द्रविणस्थानमुत्खनन्ती विलासवत्या सकेशग्राहं कलहायिता निर्वासिता च।

महामात्यवत्सराजविरचितरूपकसङ्ग्रहे

# रुक्मिणीहरण ईहामृगः ।

दरमुकुलितनेत्रा स्मेरवक्त्राम्बुजश्री-
रुपगिरिपतिपुत्रि प्राप्तसान्द्रप्रमोदा ।
मनसिजमयभावैर्भावितध्यानमुद्रा
वितरतु रुचितं वः शाम्भवी दम्भभङ्गिः ॥ १ ॥

अपि च—

उपलशकलकल्पः कौस्तुभो यामिको मे
हृदि तव रमणीनां वार्यते केन यात्रा ।
त्वमसि कुवलयाभस्तत्कटाक्षोपमर्दै-
र्भणितिभिरिति लक्ष्म्याः पातु मूको मुरारिः ॥ २ ॥

( नान्द्यन्ते )

सूत्रधारः—( सहर्षम् ) दिष्ट्या मनोरथ इव द्रागुपगतः परितोषयति मामभिनयसमयः । अहं हि कालञ्जरे चक्रस्वामियात्रासमागतविदग्धसामाजिकै-रादिष्टोऽस्मि । यदद्य चन्द्रोदये देवस्य चक्रस्वामिनः पुरतो रुक्मिणीहरणाह्वयः कविवत्सराजविरचित ईहामृगोऽभिनेयः । ( सौत्सुक्यम् ) किं पुनर्विश्रब्धायते मम परिजनः ? ।

स्थापकः— ( प्रविश्य ) भाव ! त्वर्यतां त्वर्यतां समतिक्रामत्यभिनयवेला । पश्यतु भावः ।

उदयगिरिकुरङ्गीरागपाशेन कृष्टः
परिपततु कुरङ्गो मा ममायं विमूढः ।
इति हृदि कृतशङ्को नूनमेणाङ्क एष
त्वरितपदमुपैति व्योमरङ्गस्य मध्यम् ॥ ३ ॥

सूत्र०—( विहस्य ) अहो मे परिजनस्य निजदोषारोपणे परमूर्द्धनि नैपुणम् । भवन्त एव विश्रब्धा, भवन्त एव मां त्वरयन्ति ।

स्थापकः—( विहस्य ) क्षाम्यतु क्षाम्यतु भावः । स तव प्रसादभूमिर्दुः-

शीलो नाम शैलूषः कामपि कन्यां दुर्लभामन्यकामां समीहमानः सम्बोध्य सम्बोध्य निषिध्यमानो विलम्बमियन्तं कारितवान् ।

( नेपथ्ये )

अयि यूथनाथ ! करिणीं कामपि रमणीं कुरुष्व रमणीयाम् ।
अभ्रमुसमागमाशाभ्रान्तिरियं दारुणा भवतः ॥ ४ ॥

( आकाशे )

अयि भद्र ! गत्वा श्रावयैतां गाथां तं दुःशीलं शैलूषं, तं च शिशुपालम् ।

( नेपथ्ये )

श्रावय शैलूषं, मा शिशुपालम् ।
भवत्वेषोऽविमृश्यकारी विपदामास्पदम् ।

सूत्र०—मार्ष ! अक्रूरोऽयं रुक्मिणीशिशुपालपरिणयामन्त्रणाश्रवणाज्ज्वगिनि प्रगल्भमाणरोषाङ्कुरो व्याहरति । तदेह्यावामनन्तरकरणीयं सम्पादयावः ॥

( इति निष्क्रान्तौ )

प्रस्तावना

( ततः प्रविशत्यक्रूरः )

अक्रूरः—( सरोषाश्चर्यम् ) अहो ! बालिशत्वं शिशुपालस्य । यदयं मधुकैटभारिप्रेमसरसीराजहंसीं रुक्मिणीं निजमनोमरुमण्डले बलेन वासयितुमभिलषति । कथितं हि मे सुबुद्ध्या परिव्राजिकया रुक्मिणीवृत्तान्तम् ।

पुलकोद्गमपीनाङ्गी कृष्णविवाहं निशम्य सा भवति ।
मनुते विवाहमन्यं स्वप्नविवाहं कुरङ्गाक्षी ॥ ५ ॥

रुक्मिणीधात्रेयिकया सुवत्सलयापीत्थं निवेदितम् । ते हि रुक्मिणीप्रहिते द्वेऽपि कृष्णं निरूपयितुं सुगुप्तमागते । सा च सुबुद्धिपरिव्राजिका रुक्मिण्या गौरीमन्त्रोपदेशगुरुरनुलङ्घ्यनिदेशा । रुक्मिणीकृष्णविवाहाय च द्वेऽपि ते कृतप्रतिज्ञे गते । दैवमग्रतः प्रमाणम् । अथवा वरयतु वरयतु शिशुपालो रुक्मिणीम् । अलं मे हर्षावसरे वैमनस्येन ।

सोऽयं महानभ्युदयो यदूनां यदित्थमागांसि करोति चैद्यः ।
तद्रक्तवर्षैकसमो मुरारेः क्रोधाग्निरुत्तिष्ठति नान्यथास्य ॥ ६ ॥

न चाद्यापि कषति कर्णौ कृष्णस्य रुक्मिणीवरान्तरपरिग्रहवार्त्तादुर्वाता-

वत्तैः । अहो ! महद्वैमनस्यमायातं जनार्दनस्य । कथितं हि मे तदासन्नपरिजनेन—

> किं कथ्यते श्रवणमात्रपरिग्रहेऽपि
> दत्तोत्सवा दनुजवैरिणि रुक्मिणी सा ।
> आलोकितेव निकटान्निकटीकृतेव
> सोत्प्रासचाटुवचनैरनुमोदितेव ॥ ७ ॥

तदहं तमेव देवमुपसर्पामि सन्धुक्षयामि रोषानलमस्य चेदीन्द्रदारुणदुर्णयोदन्तदारुणा । ( परिक्रम्य पुरोऽवलोक्य ) अये ! प्राप्त एवाहं सभासौधम् । ( निरूप्य सहर्षम् ) कथं द्वावपीह रामकृष्णौ । अहो ! जगद्विख्याता बन्धुप्रीतिरनयोः । तथाहि—

> एके रामं मरकतमया बिभ्रते बिम्बिताङ्गं
> कृष्णं चैके स्फटिकघटिता व्यक्तमेवोद्वहन्ति ।
> तत्सौभ्रात्रं सहजसुभगं संविदानैर्मनोज्ञैः
> सौधस्तम्भैरपि किमनयोः कल्पितः संविभागः ॥ ८ ॥

कथं प्रतीहारमात्रपरिजनावेतौ ! । किमेतत् ! । ( कतिचित्पदानि दत्वा ) किं पुनरिमौ क्रोधाविष्टाविव दृश्येते । तथाहि—

> कपोलौ स्वेदाम्भःकणकवचितौ दृष्टिररुणा
> वपुस्ताम्रच्छायाच्छुरितमधरौ वेपथुमयौ ।
> प्रलम्बघ्नस्येत्थं भवति मद्योगेऽपि रचना
> विना क्रोधोत्सेधं न पुनरमरारातिजयिनः ॥ ९ ॥

तदुपसर्पामि । ( इत्युपसर्पति )

**प्रती०**—( सप्रश्रयम् ) अयि देवौ रामकृष्णौ ! प्रणमति युवामक्रूरः ।

( अक्रूर प्रणमति )

**कृष्णः**—( सालस्यमिव ) आसनम् ।

( प्रतीहारः आसनमुपनयति )

**अक्रूरः**—( सप्रश्रयं ससम्भ्रमम् ) किं पुनरत्र भवतोर्वैमनस्यमिव पश्यामि ? ।

**कृष्णः**—( सावज्ञम् ) न किञ्चित् ।

**रामः**—(सरोपावेशम् ) अयि अक्रूर ! वीरकृष्ण एव कृष्णः । आकर्णयतु भवान् ।

गोवर्द्धनमचलेन्द्रं तृणलववुद्ध्यैव यः किलातुलयत् ।
वीरस्तृणाय कृष्णं तमेव बत मन्यते रुक्मी ॥ १० ॥

अक्रूरः—( साश्चर्यम् ) रुक्मी शार्ङ्गपाणौ गर्वायत इति न प्रत्येति हृदयम् ।

कृष्णः—( सावज्ञस्मितम् ) प्रतीहार ! निवेदय यथावृत्तम् ।

प्रती०—इह मया कृष्णदेवे समागच्छति विजयतां देव इत्युदीरितम् । ततः कश्चिदिह बहिःस्थितो बन्दी ससंरम्भं बभाषे ।

आच्छाद्य देवभणितिं भुवि भव्यभोगान्
रे भूभुजो भजत मुक्तमुधाभिमानाः ।
संरब्धरुक्मिशरगोचरतां गतानां
युष्माकमस्तु सुरसद्मनि देवशब्दः ॥ ११ ॥

अपि च—

दावाग्निमालिङ्गति कः प्रमत्तः ।
कृष्णाहिना क्रीडति हेलया कः ।
प्राणाः प्रियाः कस्य न जीवलोके
को रुक्मिणं रोषयते रणाय ॥ १२ ॥

अक्रूरः—( ससंरम्भम् ) ततः किमुक्तं रामेण ? ।

प्रती०—पश्चादिहायातं प्रलम्बारिणा कृष्णवीरेण किमनुक्तमासीत् ।

अक्रूरः—( सौत्सुक्यम् ) किमुक्तम् ? ।

प्रती०—एवमुक्तं समानय तं वीरं समराङ्गणम् ।

परमानन्दकृद्दानं युगपत्तव रुक्मिणः ।
द्रविणेन कृपाणेन करिष्ये समराङ्गणे ॥ १३ ॥

अक्रूरः—साधूक्तं कृष्णदेवेन । अहं पुनर्न प्रत्येमि मुरारौ रुक्मी वैरायते ।

छागो मुहुर्वल्गति गाढगर्वश्छागेन सार्द्धं प्रसरत्प्रमोदः ।
कण्ठीरवं वीक्ष्य सशब्दकण्ठं को वेत्ति वैक्लव्यमुपैति कीदृक् ॥ १४ ॥
बन्दिनस्तु वन्द्या एव । किन्नैते वदन्ति । अयि वीरशिरोमणे कृष्णदेव !

त्वदीयनन्दकान्दोलमारुतेनापि सद्रुमः।
वैकुण्ठः कम्पतेऽत्यर्थं रुक्मिणः परमो गुरुः ॥ १९ ॥

आकर्णितो मया अविनयः शिशुपालस्य। न च विज्ञपयितुं युज्यते तत्र प्रहितप्रियंवदस्यानागमने।

( नेपथ्ये )

कः कोऽत्र भोः। निवेदयत कौण्डिनपुरादागतं प्रियंवदम्।

( प्रतीहारः सहसोपसृत्य प्रियंवदेन सह प्रविशति )

**प्रियंवदः**—( सहसोपसृत्य ) एष प्रियंवदः प्रणमति।

**अक्रूरः**—( उपविश्य ) निवेदयतु भवान्।

( प्रियंवदः उपविश्य तिष्ठति )

**अक्रूरः**—( स्वगतम् ) मुखविकार एवं व्याकरोति प्रयोजनासिद्धिम्। तदपि पुनः पृच्छामि। ( प्रकाशम् ) प्रियंवद ! विज्ञपय।

( प्रियंवदः तथैव तूष्णीमास्ते )

**अक्रूरः**—प्रियंवद ! किं न विज्ञपयसि ?।

**प्रियं०**—जइ विण्णविदुं उचिदं भोदि ता किन्न विन्नवेमि। को मह तहा विण्णविदे दुदीअं जीहं दइस्सेदि[1]।

**रामः**—( ससंरम्भम् ) किन्न विज्ञपयसि यथावृत्तम् ?। किमिह तवैव किमप्यागः ?।

**प्रियं०**—( सभयम् ) तदवि अहं न विण्णविस्सं। लेहोय्येव एसो विण्णवेदु[2]। ( इति लेखमर्पयति )

**अक्रूरः**—( वाचयति )

यशोदायाः स्तन्यैस्तव तनुरयासीदुपचयं
वनान्तेषु भ्रान्तस्त्वमसि सह तैस्तर्णकशतैः।

---

१ यदि विज्ञपयितुमुचितं भवति तत्किं न विज्ञपयामि। को मम तथा विज्ञप्ते द्वितीयां जिह्वां दास्यति।

२ तदपि अहं न विज्ञपयिष्यामि। लेख एवैष विज्ञपयतु।

यदि त्वादृक्कश्चिद्धत नृपतिपुत्रीं वरयते
तदानीं कः क्रोधः किमु न शशिनं वाञ्छति शिशुः ॥ १६ ॥

प्रियं०—एस उण लेहो सिसुवालेण रुप्पिणीकए पेसिदो। रुप्पिणावि एदं केसवस्स दंसयिस्ससित्ति भणिअ मह हत्थे समप्पिदो।[1]

(इति द्वितीयं लेखमर्पयति)

अक्रूरः—(वाचयति)

गतः पुष्टिं बाल्यात्प्रभृति चिरमाभीरभवने
ततः स्वामिद्रोहव्यतिकरसमारूढमहिमः।
सवैकुण्ठः सूरो यदि हृदि विलग्नोऽस्ति सुतरा-
मकुण्ठोऽस्मत्खड्गस्तदयमपि गण्योऽस्तु भवताम् ॥ १७ ॥

शिशुपालस्य प्रकृतिदुःशीलस्य नेदमद्भुतम्। रुक्मिणः पुनः प्रकृतिवैपरीत्यमिदम्। (साश्चर्यम्) प्रियंवद!

श्रुतो भूतावेशः किमु न भवता तस्य विषमः

प्रियं०—(विहस्य) ता कधं इअरकज्जे कुसलो?[2]।

अक्रूरः—प्रदत्तोऽयं लेखः किमु न मदिरापानसमये।

प्रियं०—णं हु ण हु[3]।

अक्रूरः—न कृष्णस्तेनान्यो मनसि कलितो भ्रान्तिवशातः।

प्रियं०—(सोपहासम्) अवरोवि किं कन्हो बलभद्दभादुओ वसुदेवसुओ देवईनंदणो[4]?।

अक्रूरः—ध्रुवं क्रुद्धः कालो विघटयति सद्बुद्धिमचिरात् ॥ १८ ॥

रामः—(ससंरम्भम्)

---

१ एष पुनर्लेखः शिशुपालेन रुक्मिणीकृते प्रेषितः। रुक्मिणाऽपि एतं केशवस्य दर्शयिष्यसीति भणित्वा मम हस्ते समर्पितः।

२ तत्कथमितरकार्ये कुशलः?।

३ न खलु न खलु।

४ अपरोऽपि किं कृष्णो बलभद्रभ्राता वसुदेवसुतो देवकीनन्दनः?।

नहि वहति नरेन्द्रे क्वापि सक्षीरमुद्रा-
रभसरसदरिद्रे जाङ्गले लाङ्गलं मे।
उपचितसुखराशिं चैद्यदेहं खनन्ती
फलतु कृषिरिदानीं साधु सङ्कर्षणस्य ॥ १९ ॥

कृष्णः—( स्वगतं सहर्षम् )

चित्तं प्रसीद समुपैति मनोरथस्त्वां
सा वल्लभाऽद्य सुलभाऽजनि दुर्लभापि।
त्यक्ता गृहस्थपरिपाटिकदर्थना सा
जातोऽधुना सपदि नन्दक एव दूतः ॥ २० ॥

रामः—( खड्गमास्फालयन् सहर्षं ससंरम्भम् )

स्वच्छन्दं मधुपानकेलिषु मया स्वात्मा सुखं स्थापितः
प्रीतस्तत्र कृतो निजः परिजनस्त्वं वञ्चितः केवलम्।
हंहो खड्ग ! पिब प्रकाममधुना सम्बन्धिनो रुक्मिणः
स्वादुस्फारमहास्त्रपूरमदिरां लुम्पामि दोषं निजम् ॥ २१ ॥

अक्रूरः—( सहासं सरोषम् ) अयि वीरशिरोमणे राम ! शिशुपालरुक्मिणीपरिणयेऽपि भवतां रुक्मी सम्बन्धी।

रामः—( सरोषं ससंरम्भम् ) अयि अक्रूर ! यादृगक्रूरो न भाषते तादृगुक्तम्।

कंसारिः परिणेष्यते परमयं तां रुक्मिणीं कन्यकां
चेदीन्द्रो विहरिष्यते सुरवधूवर्गेण सार्द्धं चिरात्।
यद्येतत्समराङ्गणे सफलयाम्युन्मुद्रदोर्विक्रमो
नामोद्दामगुणं भविष्यति परं तत्कामपालेति मे ॥ २२ ॥

अयि प्रतीहार ! दीयतां समरविजयप्रयाणदुन्दुभिः।

प्रती०—यथादिशति स्वामी।

कृष्णः—( सप्रश्रयम् ) अयि रौहिणेय ! कल्पान्तक्रुद्धरुद्रापवादः कोऽयमकाण्डे दारुणः संरम्भः। महदिदमनुचितम्।

क्षतसमदगजानां कुम्भमुक्ताफलौघै-
र्वितरति वनदेशो केसरी यश्चतुष्कम्।

चपलचटकडिम्भे दातुमिच्छोश्चपेटं
कथमिव बत लज्जा तस्य नैवोज्जिहीते ॥ २३ ॥

रामः—कृष्ण ! कृष्ण ! तिष्ठ नैष विलम्बावसरः ।

क्षुद्रक्षत्रियकीटकैरविदितक्षात्रव्रतैः कल्पितं
वाक्पारुष्यमपावनं कलयतोर्मत्कर्णयोर्दारुणम् ।
प्रायश्चित्तविधिर्भविष्यति दलत्तत्कीकसोल्लासिता
तेषां कण्डननिःस्वनेन मुशलैर्युद्धाङ्गणोदूखले ॥ २४ ॥

कृष्णः—( ससंरम्भम् ) आः ! किमकृष्णा पृथिवी यदित्थमुत्ताम्यसि ।

मत्कारणेन गुरुणा मम दुर्मदारि-
क्रूराक्षरश्रवणदुःखमसह्यतेदम् ।
कृष्णोऽस्मि चेदहह ! तत्परितोषयिष्ये
कर्णौ तवोत्कटतदीयवधूविलासैः ॥ २५ ॥

रामः—( सवात्सल्यम् ) कृष्ण ! कृष्ण ! मैवम् ।

शस्त्रास्त्रविद्यासु न बालिशोऽसि
तथापि मे केशव ! बालिशोऽसि ।
त्वां रुक्मिणीपाणिनिपीडनाय
वरं न योद्धारमहं करिष्ये ॥ २६ ॥

अक्रूरः—( सहर्षम् ) नन्दन्तु यादवाः, यदि द्वेषिनिष्पेषाय रामकृष्णावित्थं कृतप्रतिज्ञौ ।

रामः—( सावेगम् ) अक्रूर ! समाकर्णय वैरिवधविलम्बासहं मम दुष्करं नियमम् ।

दत्तारातिक्षतजमदिरासत्रदातुः शिवाभ्यो
यावन्नास्य प्रणमति पदौ केशवो रुक्मिणी च ।
प्राणेभ्योऽपि प्रियतरगुणां सम्मदाद्वैतकर्त्रीं
हालां हालाहलमिव हली मन्यतां तावदेषः ॥ २७ ॥

अक्रूरः—अहह ! दुष्करः कृतो रामेण नियमः ।

कृष्णः—आः ! कष्टं कष्टम् । किमकाण्डे नः कष्टमङ्गीकृतमार्येण । अक्रूर ! तदिदानीं प्रातरेवास्तु प्रयाणोत्सवः ।

अक्रूरः—एवमेवास्तु। सम्प्रति हि प्रतीचीप्रयाणोत्सुको वर्त्तते गभस्तिमाली।

( नेपथ्ये )

यामानिमान्कतिपयानपराम्बुराशि-
सौधस्थितो गमय मीलितरश्मिनेत्रः।
सूर्य ! प्रसीद पुनरभ्युदयाधिरूढः
प्रह्लादयिष्यसि जगन्नवकान्तिकान्तः॥ २८॥

रामः—( श्रुत्वा सहर्षम् ) अहो ! सदुपश्रुतिः।

कृष्णः—उपश्रुत्या प्रबोधितोऽस्मि। तदेहि भवने यामिनीमेतां समरगेलामतिवाहयावः

( इति निष्क्रान्ताः सर्वे )

प्रथमोऽङ्कः

---

# द्वितीयोऽङ्कः

( ततः प्रविशति प्रियंवदः )

प्रियंवदः—( पुरोऽवलोक्य ) कधं एसो देवीए रेवदीए सोविदल्लो अय्य-दीवओ इदोमुहं परिक्कमदि । ता जाणेमि इमादो रेवदीरमणवुत्तन्तं । ( उपसृत्य ) अय्य दीवअ ! एसो पियंवदो पणमदि[1] ।

दीपकः—दैत्यारिप्रसादभाजनं भूयाः ।

प्रियं०—अय्यदीवअ ! पडिबुद्धो बलदेवो[2] ? ।

दीपकः—कदा प्रसुप्तो बलदेवः ? ।

प्रियं०—( ससम्भ्रमं साश्चर्यम् ) अहो ! कोवसमावेसो महावीरस्स । ता किं समग्गं य्येव जामिणिं जागरिदो[3] ।

दीपकः—

मत्तान्सज्जय कुञ्जरान्हरिवरान्पर्याणयोज्जागरा-
न्शौर्यस्यावसरोऽद्य तिष्ठत भद्राः कष्टं क्व नष्टा द्विषः ।
उत्स्वप्नायितभङ्गिभिर्मुखरितः क्रूराभिराभिर्मुहुः
क्रोधोत्सेधमहान्तरायविरलां निद्रां सिषेवे बलः ॥ १ ॥

प्रियं०—कहिं पुण अय्यो पत्थिदो[4] ? ।

दीपकः—प्रेषितोऽस्मि प्रयाणारम्भाय बलदेवेन देवकीनन्दनसकाशम् ।

प्रियं०—अहं उण कामवालं आणेदुं कण्हेण पेसिदोम्हि । चिट्ठदि कन्हो उद्धवअक्कूरसच्चइसहिदो सहामंडवम्मि । ता एदु अय्यो । सहिदय्येव बलभद्दभवणं गच्छम्हे[5] ।

---

१ कथमेष देव्या रेवत्याः सौविदल्लः आर्यदीपकः इतोमुखं परिक्रामति । तज्जानामि अस्माद्रेवतीरमणवृत्तान्तम् । आर्यदीपक ! एष प्रियंवदः प्रणमति ।

२ आर्यदीपक । प्रतिबुद्धः बलदेवः ? ।

३ अहो कोपसमावेशो महावीरस्य । तत्किं समग्रामेव रात्रिं जागरितः ? ।

४ कुत्र पुनः आर्यः प्रस्थितः ? ।

५ अहं पुनः कामपालमानेतुं कृष्णेन प्रेषितोऽस्मि । तिष्ठति कृष्णः उद्धवाक्रूरसात्यकिसहितः सभामण्डपे । तदेतु आर्यः । सहितावेव बलभद्रभवनं गच्छावः ।

दीपकः—क्रोधनः प्रलम्बारिस्तदहं यथादिष्टं सम्पादयामि । त्वमपि निजनियोगं सम्पादय ।

( इति निष्क्रान्तौ )

**विष्कम्भकः**

( ततः प्रविशति सभामण्डपे यथानिर्दिष्टः कृष्णः )

कृष्णः—( स्वगतं सोत्कण्ठं सरोषम् ) अहह !

तरलयतः स्मररोषौ दुर्मदरिपुमदनकेलिरमणीयौ ।
मां पाणिपीडनविधौ रुक्मिण्या असिलतायाश्च ॥ २ ॥

अपि च—

अहो ! मदनप्रभाववैभवम् ।

श्रुतिपरिचयमात्राचारुनेत्रा प्रिया सा
हृदयमपि गृहीत्वा किङ्करं मां करोति ।
यदयमदययुद्धोन्मर्दलीलारसोऽपि
स्फुरति तदनुरोधादेव विद्वेषिपेषी ॥ ३ ॥

तदेवं तावत् । (प्रकाशं सक्रोधम्) अयि सुमन्त्रिणः! किमुच्यते युष्मासु ।

दम्भोलिरुत्पलपलाशमृदुस्तदग्रे
यैरक्रियन्त परमाणुचयैर्भवन्तः ।
तैर्दृसवैरिपरुषाक्षरतीक्ष्णटङ्कै-
र्येषामकारि हृदयेषु न कोऽप्युपाधिः ॥ ४ ॥

सात्यकिः—( सावज्ञम् ) अयि जनार्दन ! विज्ञपयामि ।

ये केचिन्मदवेगलुप्तमतयो ये वातवातूलिता
ये गर्वग्रहलङ्घिता विकृतिकृत्क्रुद्धः स येभ्यो यमः ।
तेषां का पुरुषाक्षरेषु गणना हासः परं युज्यते
दुर्वृत्तोचितदण्डपातनविधौ कस्तेषु दोलायते ॥ ५ ॥

कृष्णः—( सहर्षम् ) तदिदानीं किं विलम्बेन ? ।

उद्धवः—( सस्मितम् ) कृष्ण ! किमौत्सुक्येन ? ।

दर्पोत्कटाः प्रतिभटास्त्वयि सम्मुखीने
यास्यन्ति किन्तु परिहृत्य रणोत्सवं ते ।

किं तेषु ते नयनगोचरतां गतेषु
वन्ध्यो भविष्यति शरासन एष शार्ङ्गः ॥ ६ ॥

अक्रूरः—( सप्रश्रयम् ) अयि देवकीनन्दन ! किं चेदिराजनगराय किमुत कौण्डिनपुराय दीयतां प्रयाणमिति संशयान्धकारे भवतु देवस्य महोत्साहविक्षेपः ।

( दीपकः प्रविश्य )

दीपकः—( सप्रणामं सप्रश्रयम् ) देव ! प्रेषितोऽस्मि रामेण कौण्डिनपुराय प्रयाणकं कारयितुम् ।

( कृष्णः सस्मितमक्रूरमुपनर्मायते )

अक्रूरः—भद्र दीपक ! विज्ञपय गत्वा बलदेवमिहागमनाय । सिद्धमेवैतत् ।

कृष्णः—प्रेषित एव मया तत्र प्रियंवदः ।

प्रियं०—( प्रविश्य ) देव ! आगदो एस समररणरणअजागरेण कहकहवि गमिदजामिणीसमओ रामवीरो[1] ।

( ततःप्रविशति रामः )

कृष्णः—( ससम्भ्रमम् ) आसनमासनमत्रभवते ।

( प्रियंवद आसनमुपनयति । रामः सर्वान्यथोचितं सम्भाव्योपविशति )

कृष्णः—( रामं विभाव्य स्वगतं सहर्षम् )

विध्वस्तत्रिपुरीपुरीपरिवृढः प्राप्तैव सा रुक्मिणी
रुक्मी सोपि निराकृताहवभरः क्लैब्यैकपात्रं कृतः ।
इत्थंसिद्धमिवावगत्य रुचितं बाढं मनः प्रीयते
दृष्ट्वोत्साहविभूषणं वपुरिदं स्फारं प्रलम्बद्रुहः ॥ ७ ॥

उद्धवः—( सहर्षाश्चर्यं स्वगतम् ) अहो ! सर्वातिशायिता वीराणाम् ।
तथाहि—

दृष्टे बले बलीयसि सङ्क्रामति शौर्यमसमदाद्येऽपि ।
गलहस्तित इव सहसा निष्क्रामत्युपशमो हृदयात् ॥ ७ ॥

---

१ देव ! आगत एष समररणरणकजागरेण कथं कथमपि गमितयामिनीसमयो रामवीरः ।

रामः—(सरोषोपहासम्) अयि मन्त्रिणः!। किमद्यापि मन्त्रयन्ते भवन्तः?।
अथवा—

वेगादुच्चाटयन्ती सुचिरमुपचितं क्षात्रधर्मप्ररोहं
किं स्तुत्या मन्त्रशक्तिः स्फुरति निरुपमा कापि सन्मन्त्रिणां वः।
क्रोधाग्निस्तम्भिका या दनुजदमयितुर्मानसं मोहयन्ती
दसक्ष्मानाथनारीनयनयुगजलस्तम्भमाविष्करोति ॥ ९ ॥

उद्धवः—(सावज्ञहासम्) अयि राम! वैरिवर्ग एव विजृम्भतां भवतः प्रकोपः। इह सम्प्रधारितमेव प्रयाणम्। प्रियंवद! आहूयन्तां मौहूर्त्तिकाः।

रामः—(सोपहासम्) किमनेन मुधा विस्तरेण।

सर्वे ग्रहाः प्रसन्ना नन्दकमुष्टिग्रहानुकूल्येन।
आयासो गणकानां मिथ्या ग्रहगणितविस्तारैः॥ १० ॥

अपि च—

व्योम्नि प्रहृत्य मुशलं ग्रहमण्डलीं ता-
मावर्त्य साधु घटयामि तथा यथाऽत्र।
उच्चावचस्थितिविपर्ययतोऽनुकूला
सम्पादयिष्यति समीहितसिद्धिमेव॥ ११ ॥

उद्धवः—(सप्रश्रयम्) अयि प्रलम्बारे! धर्मोद्धाराय कृतावतारा भवन्तस्तन्नैवम्।

सिद्ध्यन्ति कामा बलिनां बलेन
लोकस्थितिः किन्तु न लङ्घनीया।
दृष्ट्यैव संहर्तुमलं गिरीशः
शत्रुच्छिदे सज्जयति त्रिशूलम्॥ १२ ॥

रामः—(सोत्साहम्) अयि आङ्गिरसशिष्य सर्वज्ञशिरोमणे! अहमेव तव मन्त्रगतिं सफलीकरोमि। आनय मौहूर्त्तिकान्, परिनिष्ठीयतां विवाहलग्नम्।

आमुक्तकङ्कणभुजो मधुकैटभारि-
रत्रैव तिष्ठतु विवाहदिनप्रतीक्षः।
वीरेण तेन सहसा सह रुक्मिणैव
तां रुक्मिणीमहमिहैव समानयामि॥ १३ ॥

उद्धवः—अयि राम ! मैवं मैवम् ।

वातान्दोलचलाचलध्वजपटश्रेणीमिलन्मण्डपे
　सिञ्जानोत्कटदुन्दुभिध्वनिमये सङ्ग्रामलीलाङ्गणे ।
उद्वाहं विजयश्रियः क्षितिभुजामग्रे गुरूणां हरिः
　कृत्वा भीष्मकपुत्रिकापरिणयं पश्चात्करिष्यत्यसौ ॥ १४ ॥

कृष्णः—(सहर्षं सोपहासम्) युज्यत एव ज्येष्ठस्य बलदेवस्य। तथाहि—

अरिष्टस्य ध्वंसः कपटहयकेशिप्रमथनं
　स चाणूरच्छेदस्तदपि मथुरानाथदलनम् ।
इति स्वल्पोद्योगे निकषितभुजं दारुणतरे
　दयालुस्तालाङ्कः कथमिव रणे योजयति माम् ॥ १५ ॥

रामः—(सहर्षहासम्) अयि मन्त्रिणः !

मनःकुटीरे मधुकैटभारेरभ्युद्यतः क्रोधहुताशनोऽयम् ।
इहैव दुर्बुद्धिसमिद्भिरास्तां प्रयाणमाङ्गल्यविधानहोमः ॥ १६ ॥

अयि मधुकैटभारे ! तदुत्तिष्ठाभिवाद्य पितरौ त्रिजगत्प्रयाणाय सज्जीभवावः।

(ततः प्रविशति वसुदेवो देवकी प्रतिहारी च)

प्रती०—इदो इदो एदु देवो, इदो इदो एदु देवी[१] ।

रामः—(विलोक्य सहर्षम्) अयि कृष्ण ! कृष्ण ! पश्य पश्य स्मरणमात्रादेवोपस्थितौ पितरौ । तदनेन सुनिमित्तेन मनोरथसिद्धिमपि तव द्रागभिमुखीं विभावयामि । तदभ्युत्तिष्ठावहे तावत्पितरौ । (इत्युत्थाय नाट्येन प्रणमतः)

वसुदेवः—(उभौ शिरस्याघ्राय) अयि रामकृष्णौ ! न जाने किमाशासे भवतोः । भूयास्तां समस्तमनोरथपात्रं भवन्तौ ।

देवकी—अजरा अजेआ अहो नु मह पुत्तआ[२] ।

(उद्धवाद्याः ससम्भ्रममुत्थाय प्रणमन्ति । प्रतीहारी प्रियंवदा चासनान्युपनयतः । सर्वे यथोचितमुपविशन्ति)

कृष्णः—(स्वगतं सहर्षोत्कण्ठम्)

---

१ इत इत एतु देवः, इत इतो एतु देवी ।
२ अजरौ अजय्यौ अहो नु मम पुत्रकौ ।

एतां विलोक्य जननीं सहजोज्झितान-
वात्सल्यमुद्धटयते कमपि प्रमोदम्।
जन्मान्तरैरुपचितामिव तां यशोदा-
स्नेहस्थितिं ननु तदप्यवजेतुमीष्टे ॥ १७ ॥

रामः—( सप्रश्रयम् ) किमादिशन्ति गुरवः ?।

( वसुदेवो देवकी मुखमीक्षते )

देवकी—अयि राम ! कन्हविवाहत्थं गमिस्सध कोण्डिनपुरम्। भोदु मह ननंदाए नंदणो विसमसराहिट्ठाणं रत्तंबरमंडिदो परमसुहभाअणं।[1]

रामः—( साकूतस्मितम् ) अयि कृष्ण ! प्रतीच्छ पित्रोरादेशम्।

कृष्णः—शिरसि बद्धाञ्जलिं सिद्धमिममादेशं मन्यन्तां पादाः।

उद्धवः—( अपवार्य ) अयि सात्यके ! अयि अक्रूर ! ग्रन्थौ बध्नन्तु भवन्तो देव्या देवक्या निदेशम्। अयि राम ! कृष्णविवाहाय कौण्डिनपुरं गच्छत। भवतु मम तत्र ननान्दृनन्दनः—( इत्यर्धोक्तौ स्मितं नाटयति )

अक्रूरसात्यकी—तिष्ठतु तिष्ठतु। अलं व्याख्यया।

देवकी—( सहर्षम् ) अयि विजये ! गच्छ समाणेसु शिशुपालदूअं[2]।

प्रती०—जं देवी आणवेदि[3]। ( इति निष्क्रम्य तेन सह प्रविशति )

देवकी—( सहर्षम ) अयि संधाणअ ! उअंसप्प कन्हं सरामं[4]।

सन्धानकः—जयदु जयदु रामेण समं कण्हो[5]।

सुहलक्खणसंपुण्णं अणुरत्तं रअणसालिअं एदं।
अइदुल्लहमवरेहिं गेन्ह तुमं कण्ह ! नरवइणो[6] ॥ १८ ॥

( इति मालिकामानमुपनयति। कृष्णो नाट्येन गृण्हाति )

---

१ अयि राम ! कृष्णविवाहार्थं गमिष्यथ कौण्डिनपुरम्। भवतु मम ननान्दृनन्दनो विषमशराधिष्ठानं रक्तांबरमण्डितः परमसुखभाजनम्।

२ अयि विजये ! गच्छ समानय शिशुपालदूतम्।

३ यद्देव्याज्ञापयति।

४ अयि सन्धानक ! उत्सर्प कृष्णं सरामम्।

५ जयतु जयतु रामेण समं कृष्णः।

६ शुभलक्षणसम्पूर्णामनुरक्तां रत्नशालितामेताम्।
अतिदुर्लभामवरैः गृहाण त्वं कृष्ण ! नरपतेः ॥

देवकी—विजये आसणं संधाणअस्स[१] ।

सात्यकिः—( अपवार्य ) मन्त्रिशिरोमणे उद्धव ! अक्रूर ! [illegible] अनेन वचनोपन्यासेन रत्नमालासमानयनेन च हस्तगता हरेः संवृत्ता रु[illegible]णी ।

उद्धवाक्रूरौ—( सहर्षोल्लासम् ) साधु साधु ! एवमेवैतत् ।

( नेपथ्ये )

आमन्त्रितामहह ! कृष्णकृते किमेतां
त्वं मालतीं स्पृशसि पाणितलेन मोहात् ।
धिग्धिक्प्रमाद्यसि मुधैव विपत्प्रवेश-
द्वारं जना अनुचिताचरणं वदन्ति ॥ १९ ॥

उद्धवः—( सहर्षम् ) अये ! बोधयति सदुपश्रुतिरियं [illegible]पालदूतं, यदि परं जानीते ।

रामः—( सरोषमिव ) प्रियंवद ! ज्ञायतां कोऽयं कस्य माल[illegible]लामपजिहीर्षति ।

प्रियंवदः—( निष्क्रम्य पुनः प्रविश्य मालतीमालां कृष्णायोपढौकयन् ) कन्हएव ! गेन्ह गेन्ह । एसा खु मालईमाला तुह कए मालाआरेण उअणिज्जमाणा केणवि गहिदुमीहिदा । पुणो सो मालाआरचंडवअणाहिक्खिविदो पलाइदो[२] ।

( रामः साकूतं विहस्य उद्धवादीनालोकते )

कृष्णः—( स्वगतं सहर्षम् )

सर्वस्वं कुसुमेषोः कामप्यानन्दसम्पदं दधती ।
सा रुक्मिणीयमागान्मम करकमलं न मालतीमाला ॥ २० ॥

उद्धवः—( सहर्षम् ) अयि कृष्णदेव ! विवाहयात्रारम्भसमयसमागतेयं मालतीमाला सुनिमित्तसूचिका । परिधीयतां द्रागियमव्यया ।

( कृष्णः सहर्षं तथा करोति )

वसुदेवः—अयि सन्धानक ! कदा पुनर्विवाहोत्सवः ? ।

---

१ विजये ! आसनं सन्धानकस्य ।

२ कृष्णदेव ! गृहाण गृहाण । एषा खलु मालतीमाला तव कृते मालाकारेण उपनीयमाना केनापि गृहीतुमीहिता । पुनः स मालाकारचण्डवचनाधिक्षिप्तः पलायितः ।

सन्धानकः—इहय्येव माहवे विवाहो भविस्सदित्ति भणामि[1] ।

उद्धवः—( साकूतम् ) सत्यमाख्याति सन्धानकः ।

रामः—( साकूतस्मितम् ) अयि कृष्ण ! किमद्यापि विलम्बते । वैशाख एव रुक्मिणीविवाहः ।

कृष्णः—अयि सन्धानक ! निवेदय चेदीश्वराय । आगता एव वयं विवाहप्रत्यासत्तौ कौण्डिनपुरम् ।

अक्रूरः—कोशाध्यक्षान्समादिश्य दत्तपारितोषिकं प्रेषय सन्धानकम् ।

सन्धानकः—अयि देव कन्ह ! कह णु देविं देवइं परिच्चइअ गदो तत्थ उव्वरामि[2] ? ।

देवकी—संधाणअ ! रामकन्हा वरपत्तिआ आअण्णिअ पिउच्छाए भविस्सदि परिओसो ! किं मए[3] ।

सन्धा०—ता इहय्येव वहू तुह पाअवंदणत्थं आगमिस्सदि[4] ।

सात्यकी—कोऽत्र विप्रतिपद्यते । एतदेव वधूगृहम् ।

वसुदेवः—वयमेव सन्धानकं दत्तपारितोषिकं विसर्जयामः । भवन्तः सज्जीभवन्तु प्रातःप्रयाणाय । विजये ! आदिश पन्थानम् ।

प्रती०—इदो इदो देवो, इदो इदो देवी[5] ।

( इति निष्क्रामतः )

( नेपथ्ये )

उदयति मदलक्ष्मीर्दन्तिनोऽमुष्य सद्यः
समिति पिशुनयन्ती वैरिवर्गस्य भङ्गम् ।
मधुरिपुवरयात्रासत्वरः सीरपाणिः
कथमिव फलमस्याः प्राप्स्यति व्यग्रचेताः ॥ २१ ॥

---

१ इहैव माधवे विवाहो भविष्यतीति भणामि ।

२ अयि देव कृष्ण ! कथं नु देवीं देवकीं परित्यक्त्वा गतस्तत्रोद्धरामि ।

३ सन्धानक ! रामकृष्णौ वरपत्नीकौ आकर्ण्य पितृश्वसुः भविष्यति परितोषः । किं मया ।

४ तदिहैव वधूस्तव पादवन्दनार्थमागमिष्यति ।

५ इत इतो देवः, इत इतो देवी ।

रामः—( समाकर्ण्य सहर्षमुच्चैः ) अयि हस्तिपक ! साधु साधु दिष्ट्या वृत्ता मम दन्तिनो मदश्रीः । मा विषीद । भविष्यति फलमस्याः ।

नहि नहि वरयात्रा केवलं कोमलेयं
रणभुवि भवितारोऽमुत्र रोमाञ्चकाराः ।
समदरिपुनरेन्द्रस्थूलवक्षःस्थलास्थि-
क्रथनकटुरवास्ते दन्तिदन्तप्रहाराः ॥ २२ ॥

अयि कृष्ण ! तद्वयं सर्वेऽपि निजनिजभवनं गत्वा प्रयाणाय सज्जीभवामः ।

( इति निष्क्रान्ताः सर्वे )

द्वितीयोऽङ्कः

# तृतीयोऽङ्कः

( ततः प्रविशति सुबुद्धिः )

सुबुद्धिः—( दीर्घमुष्णं च निःश्वस्य ) अहह ! सुकष्टः कन्यकाभावः । तथाहि—

हृदयं मदनायत्तं वपुरायत्तं च गुरुजनस्यैव ।
मरणं दैवायत्तं कथं न सीदन्तु कुलकन्याः ॥ १ ॥

अहो ! मे सुबुद्धेर्दुर्बुद्धित्वं, यदहं स्वात्मारामस्वैरविहारहरिणी कश्मलमनुष्यप्रेमाङ्कुरलालसा स्वयमेव मोहपाशे आत्मानं पातितवती । तदिदानीं रुक्मिणीप्राणात्यये सकलङ्कं मे जीवितम् । सकलङ्का भवानीमन्त्रोपदेशशक्तिः । इयमेव चार्गला रुक्मिणीप्राणानां यदत्र वरयात्राव्यपदेशेनापि कृष्णागमनम् ।

शारद इवैष दिवसः सुखयति शोषयति रुक्मिणीमनिशम् ।
कृष्णघनागमशिशिरः शिशुपालखरातपः क्रूरः ॥ २ ॥

( दिशो विभाव्य स्थित्वा चमत्कृत्य ) आः ! क्व नु प्रस्थितास्मि । ( सवैलक्ष्यम् ) कथं रुक्मिणीमन्दिराय प्रस्थिताया मम पदान्यन्यतः प्रवृत्तानि ! । ( निरूप्य ) भवत्वनेनैव पथा व्रजामि । अयमेव हि धात्रेयिकायाः सुवत्सलाया रुक्मिणीभवनगमनाय पन्थास्तदिह मा कदाचिद्दुःखसंविभागाय सापि मे मिलति ।

( ततः प्रविशति सुवत्सला )

सुवत्सला—भअवदि सुबुद्धिए ! कहिं उण तुरिदपदं परिक्कमसि । पडिवालेसु मं ।

सुबुद्धिः—( परिसृत्यावलोक्य ) कथं पृष्ठतः समेति सुवत्सला ! ( स्थित्वा ) एहि वत्से ! एहि ।

सुव०—मिलिदम्हि । चलदु चलदु इदाणिं भअवदी । कहिं उण गम्मइ ? ।

सुबुद्धिः—( दीर्घं निःश्वस्य ) कुत्रान्यत्र ? ।

सुव०—रुप्पिणीए भवणं पत्थिदा भअवदी ? । ( सास्रम् ) भअवदि ! तुह सुबुद्धित्तणं मह सुवच्छलत्तणं पि विसंवदिदं । .... रुप्पिणीए दोलाधिरूढव्व दोलइ जीविदासा ।

---

१ भगवति सुबुद्धिके ! कुत्र पुनः त्वरितपदं परिक्रामसि ? । प्रतिपालय माम् ।

२ मिलितास्मि । चलतु चलतु इदानीं भगवती । कुत्र पुनः गम्यते ? ।

३ रुक्मिण्या भवनं प्रस्थिता भगवती ? । भगवति ! तव सुबुद्धित्वं मम सुवत्सलात्वमपि विसंवदितम् । रुक्मिण्या दोलाधिरूढेव दोलते जीविताशा ।

सुबुद्धिः—अनुमरणेऽपि विसंवदितं मम सुबुद्धित्वं, न तु तव सुवत्सलात्वम्।

सुव०—भअवदि! जं तुह्म विबुद्धिविहओ मन्तसत्तीवि विसंवदइ तं रुप्पिणीए दुहेवं अवरज्झदि। कन्हो उण रुप्पिणिं परिहविस्सदित्ति ण मह हिअअं पत्तिआअदि। भअवदीए वि तत्थ कन्हपरिअणादो एदं त्रिदिदं येव—

जावच्चिअ हरिहिअए रुप्पिणिणामंति अक्खरो मन्तो।
संचरिओ तावच्चिअ उव्वसिअं इअरदइआहिं॥ ३॥

ता नंदअसहाअत्तणेणवि सहला भविस्सदि भअवदीए मन्तसत्ती[2]।

सुबुद्धिः—सुवत्सले! एहि तावदाश्वासयामो वत्साम्।

सुवत्सला—भअवदि! तीए आसासणत्थं पेसिदं मह मअरंदिआहत्थे कन्हस्स आलेक्खं। ता एदु भअवदी। कन्हसिबिरं गदुअ अलक्खिदा सव्वं जाणिअ तुरिदमुवसप्पम्ह रुप्पिणिं[3]।

सुबुद्धिः—सुवत्सले! अद्यापि यदि त्वमित्थं सोत्साहासि, तद्गृहाण रुक्मिणीसनाथमालेख्यं। येन कृष्णो विलोभ्यते।

सुवत्सला—ता इमिणा मग्गेण सुरेहं चित्तअरं आलेक्खसणाहं गेन्हिअ गमिस्सामो।

( इति निष्क्रान्ते )

विष्कम्भकः

---

१ भगवति! यत्तव बुद्धिविभवो मन्त्रशक्त्यपि विसंवदति तत् रुक्मिण्या दुर्दैवमपराध्यति। कृष्णः पुनः रुक्मिणीं परिभविष्यतीति न मम हृदयं प्रत्ययते। भगवत्या अपि तत्र कृष्णपरिजनादवगतमेव।

यावदेव हरिहृदये रुक्मिणीनामेति अक्षरो मन्त्रः।
सञ्चरितः तावदेव उद्वासितमितरदयिताभिः॥ ३॥

२ तन्नन्दकसहायत्वेनापि सफला भविष्यति भगवत्या मन्त्रशक्तिः।

३ भगवति! तस्या आश्वासनार्थं प्रेषितं मम मकरन्दिकाया हस्ते कृष्णस्यालेख्यम्। तदेतु भगवती। कृष्णशिबिरं गत्वा अलक्षिता सर्वं ज्ञात्वा त्वरितमुपसर्पाव रुक्मिणीम्।

४ तदमुना मार्गेण सुलेखं चित्रकारमालेख्यसनाथं गृहीत्वा गमिष्यावः।

( ततः प्रविशति कृष्णालेख्यन्यग्रहस्ता रुक्मिणी मकरन्दिका च )

**रुक्मिणी**—( सानुतापं निःश्वस्य ) णूणं मए जम्मन्तरे चंदसेहरस्स पडिबिंबं येव आराहिदं, जं एअस्स सुहअस्स आलेक्खमेत्तेणं येव मं हअविही विप्पआ-रेदि। सहि मअरंदिए! चुक्का भअवदी सुबुद्धी सुवच्छला अ, जं ताहिं ण कावि तत्थ सोलहसहस्समज्झे गोवी ताइं भग्गाइं अब्भत्थिदा जेहिं कन्हस्स पिअत्तणं पावीअदि। ( निःश्वस्य ) अहवा दैवहदाए मह दीणत्तणमिणं। णहु भग्गाइं दिण्णाइं होन्ति। ता एदं येव आलेक्खं अविअन्हं विहावेमि ( इति तथा करोति )

**मकरन्दिका**—( स्वगतं साशङ्कम् ) सुट्ठु उत्तम्मदि भट्टिदारिआ। ता कहिं विलंबिदा सा णिक्करुणा भअवदी सुबुद्धिआ सुवच्छला अ।

( ततः प्रविशति सुबुद्धिः सुवत्सला च )

**सुबुद्धिः**—( रुक्मिणीं विभाव्य अपवार्य ) अयि सुवत्सले! कृष्णालेख्यलीन-मानसा रुक्मिणी न पश्यत्यावाम्। तदेहि मकरन्दिकां सञ्ज्ञया निवार्य निभृ-तमस्याः पृष्ठे भवावः। ( इति तथा तिष्ठतः )

( विभाव्य साश्चर्यम् ) अहो! अभिनिवेशनिबिडता रुक्मिण्याः। तथाहि—

मुहुर्निःश्वासानां परिमलतरङ्गेषु तरलं
मुहुर्लीलाम्भोजे श्रवणकमले चार्पितपदम्।
न लोलाक्षी वेत्ति भ्रमरमविरामध्वनिभरं
मुरारेरालेख्ये लयमयमना निर्भरमियम्॥ ४॥

**रुक्मिणी**—( आलेख्यमवलोकयन्ती सोत्कण्ठम् ) धैण्णाओ ताओ गोवीओ जाओ मअणुम्हाकरम्बिदाओ एअस्स सुहअस्स इमस्सिं लाअण्णदीहिआ-अम्मि विहरन्ति। ( निरूप्य दीर्घमुष्णं च निःश्वस्य ) कुदो एस एआरिसो अम्हा रिसिहिं—( इत्यर्धोक्तौ सास्रं सगद्गदम् )

---

१ नूनं मया जन्मान्तरे चन्द्रशेखरस्य प्रतिबिम्बमेवाराधितं, यदेतस्य सुभगस्यालेख्यमात्रेणैव मां हतविधिर्विप्रतारयति। सखि मकरन्दिके! विस्मृता भगवती सुबुद्धिः सुवत्सला च, यत्ताभ्यां न कापि तत्र षोडशसहस्रमध्ये गोपी तानि भाग्यानि अभ्यर्थिता, यैः कृष्णस्य प्रियत्वं प्राप्यते। अथवा दैव-हताया मम दीनत्वमिदम्। न खलु भाग्यानि दत्तानि भवन्ति। तदेतदेवालेख्यमवितृष्णं विभावयामि।

२ सुष्ठु उत्ताम्यति भर्तृदारिका। तत्कुत्र विलम्बिता सा निष्करुणा भगवती सुबुद्धिका सुवत्सला च।

३ धन्यास्ता गोप्यः या मदनोष्मकरम्बिता एतस्य सुभगस्य अस्यां लावण्यदीर्घिकायां विह-रन्ति। कुत एष एतादृश अस्मादृशीनां—

अइ हिअअ ! पसिअ विरमसु दुल्लहपेम्मेण किं नु विनडेसि ।
वणहरिणीए हसिज्जइ मअंकहरिणम्मि अणुराओ ॥ ५ ॥[1]

सुबुद्धिः—( ससम्भ्रममुत्थाय रुक्मिण्याश्चिबुकमुन्नमय्य ) वत्से रुक्मिणि ! किमपर्याप्तस्ते गुरुजनो यदित्थमुत्ताम्यसि ।

रुक्मिणी—( स्वगतं सवैलक्ष्यम् ) कथमिहैवासीद्भगवती ! । ( प्रकाशम् ) भअवदि ! तुमं वज्जिअ गुरुअणो य्येव मे दुज्जणो[2] ।

सुबुद्धिः—( सोत्साहम् ) भवतु यः कोपि यथा तथा । गृहीतैव च तेन शार्ङ्गपाणिना पाणिना । वत्से सुवत्सले ! किन्न निवेदयसि वत्सायाः ।

सुवत्सला—( पुरतो भूत्वा ) वच्छे रुप्पिणि ! किं कआवि भअवदी अलिआलाविणी । माणिदं सुमुहुत्तं । गहिदासि आलेक्खगदा हरिणा पाणिना । संपइ णिअपाणिगहिदोचिदं हरी णिव्वाहइस्सदि[3] ।

रुक्मिणी—( स्वगतं सहर्षम् ) हिअअ ! समस्सस समस्सस । संमुहं व तुह दीसदि दिव्वं[4] ।

सुबुद्धिः—( सोल्लासम् ) किं न प्रत्येति वत्सा, तदनेनैवालेख्यगतेन गृहीतासि पाणिना शौरिणा । ( इति कृष्णचित्रफलकेन पाणिं ग्राहयति )

( नेपथ्ये दुन्दुभिरुदञ्चति )

सुवत्सलामकरन्दिके—( सहर्षं ) अहो ! सुणिमित्तं सुणिमित्तम्[5] ।

सुबुद्धिः—न खलु सुनिमित्तमात्रम् । इदानीं स एवानेन सौधतलवर्त्मना पुरप्रवेशं गोविन्दः करिष्यति । तेऽपि शिशुपालादयः । दृष्टोऽस्माभिरभ्युत्थानायोपसर्पन्महाराजो भीष्मको महाकुमाररुक्मिप्रमुखान्वितः ।

---

१ अयि हृदय ! प्रसीद विरमस्व सुदुर्लभप्रेम्णा किं नु विगुप्यसि ।
वनहरिण्या हस्यते मृगाङ्कहरिणेऽनुरागः ॥ ५ ॥

२ भगवति ! त्वां वर्जयित्वा गुरुजन एव मे दुर्जनः ।

३ वत्से रुक्मिणि ! किं कदापि भगवती अलीकालापिनी । मानितं सुमुहूर्त्तम् । गृहीतासि आलेख्यगता हरिणा पाणिना । सम्प्रति निजपाणिगृहीतोचितं हरिर्निर्वाहयिष्यति ।

४ हृदय ! समाश्वसिहि समाश्वसिहि । सम्मुखमिव तव दृश्यते दैवम् ।

५ अहो सुनिमित्तं सुनिमित्तम् ।

( नेपथ्ये )

अयि पौराः ! पौरकन्यकाः ! समादिशति वो महाराजः सज्जीभवत मङ्गलकौतुकेषु। प्रविशन्ति नगरं गरीयांसो राजानः।

मकरन्दिका—( सौत्सुक्यम् ) भअवदि सुबुद्धि ! इह तए इमिणा कन्हस्स आलेक्खेण पाणिग्गहणं कारिदं। तत्थ उण भट्टिदारिआए आलेक्खेण दुवेवि एदे एक्कठाणगदे पेक्खिदुं मे कोऊहल्लं । ता एत्थ चित्तवडे कन्हसमीवम्मि भट्टिदारिअं आलिहिस्सं।[1]

सुबुद्धिः—( विहस्य ) कस्तव कुतूहलिनस्तरलत्वं वारयति। मनोरथोऽयं पुनः साक्षात्कारेणापि प्रत्यासन्न एव ।

( मकरन्दिका नाट्येनालिख्य चित्रपटं करे करोति )

( नेपथ्ये कलकलः )

सुब०—भअवदि ! पच्चासन्ना पुरप्पवेससम्मुहा महीणाहा, जं एस निअडदो दुंदुभिझुणी सुणीअदि[2]।

मकर०—( सौत्सुक्यम् ) भट्टिदारिए ! ता एध उअरितलं सौहसिहरं आरुहिअ गवक्खन्तरे पेच्छामो[3]।

रुक्मिणी—( स्वगतं सहर्षम् ) साहु मअरंदिए ! साहु। ( प्रकाशं सावहित्थम ) यहा भअवदी भणदि[4]।

सुबुद्धिः—क्रियतामिदम्। ( इत्युत्थाय सर्वास्तथा कुर्वन्ति )

मकर०—(गवाक्षजालान्तरेण विलोक्य ) पेच्छध पेच्छध पविसन्ति णरवइणो[5]।

( सर्वा विलोकयन्ति )

मकर०—( विलोक्य सहर्षाश्चर्यम् )

---

१ भगवति सुबुद्धि ! इह त्वया अमुना कृष्णस्यालेख्येन पाणिग्रहणं कारितम्। तत्र पुनर्भर्तृदारिकाया आलेख्येन। द्वावपि एतौ एकस्थानगते प्रेक्षितुं मे कुतूहलम्। तदत्र चित्रपटे कृष्णसमीपे भर्तृदारिकामालिखिष्ये।

२ भगवति ! प्रत्यासन्ना पुरप्रवेशसम्मुखा महीनाथाः, यदेष निकटतो दुन्दुभिध्वनिः श्रूयते।

३ भर्तृदारिके ! तदत्र उपरितलं सौधशिखरमारुह्य गवाक्षान्तरे प्रेक्षावहे।

४ साधु मकरन्दिके ! साधु। यथा भगवती भणति।

५ प्रेक्षध्वं प्रेक्षध्वं प्रविशन्ति नरपतयः।

पिअसहि ! कस्स सरीरं रेहइ घोलन्तचामरं एअं ।
कंद्दोट्टकाणणं पिव मरालमालाहिं संवलिअं[१] ॥ ६ ॥

सुव०—( निरूप्य ) पेच्छध पेच्छध । एसो सो गोवीसहस्समणमोहणो महुमहणो रहारूढो समेदि[२] ।

रुक्मिणी—( सौत्सुक्यमालोक्य ) अयि लोअणा ! जस्स सुहगस्स गुणगणामअं घोट्टन्तेसु सवणेसु ईसालुआणम्व तुम्हाणं दंसणतन्हा पवट्टिदा तं अविअन्हं इदाणिं यहिच्छं पेच्छह । मुहुत्तमेत्तम्मि गेन्हद दाव जम्मफलं । को जाणदि कीस करिस्सदि अग्गदो भयवं पआवई[३] ।

( ततः प्रविशति सौधतले रथारूढः कृष्णः प्रियंवदश्च )

मकर०—( सौत्सुक्यम् ) दिट्ठिआ गवक्खंतरपलम्बिदबहुअपुव्वकाआ पेच्छामि । ( सप्रत्यभिज्ञम् ) एसो सो पिअंवदो जो तइआ इत्थ आगदुअ अकअकज्जो गदो[४] ।

सुव०—( रुक्मिणीं विभाव्य स्वगतम् ) ण हु ण हु पहुप्पइ इध संकडम्मि गवक्खन्तरे कन्हालोअणतन्हा । ता एवं दाव । ( प्रकाशम् ) अइ मअरंदिए ! इअरगवक्खन्तरे पेच्छ तुमं । पेच्छदु इध वच्छा जहिच्छं रुप्पिणी[५] ।

मकर०—एवं भोदु[६] । ( मकरन्दिकाया गवाक्षादपक्रामन्त्याः करतलाच्चित्रपटः पतति ।

प्रिय०—कन्हएव ! गेन्ह एदं तुह करकमले कमलसणाहे किंपि णिवडिदं[७] ।

---

१ प्रियसखि ! कस्य शरीरं राजति घूर्णमानचामरमेतत् ।
उत्पलकाननमिव मरालमालाभिः संवलितम् ॥

२ प्रेक्षध्वं प्रेक्षध्वं । एष स गोपीसहस्रमनोमोहनः मधुमथनो रथारूढः समेति ।

३ अयि लोचने यस्य सुभगस्य गुणगणामृतं पिबत्सु श्रवणेषु ईर्ष्यालूनामिव युष्माकं दर्शनतृष्णा प्रवर्तिता, तदवितृष्णमिदानीं यथेच्छं प्रेक्षेथाम् । मुहूर्तमात्रे गृह्णीतं तावज्जन्मफलम् । को जानीते किं करिष्यति अग्रतो भगवान् प्रजापतिः ।

४ दिष्ट्या गवाक्षान्तरप्रलम्बितबहुपूर्वकाया प्रेक्षे । एष स प्रियंवदो यः तदानीमत्रागत्य अकृतकार्यो गतः ।

५ न खलु न खलु प्रभवति अत्र सङ्कटे गवाक्षान्तरे रुक्मिणीकृष्णालोकनतृष्णा । तदेवं तावत् । अयि मकरन्दिके ! इतरगवाक्षान्तरे प्रेक्षस्व त्वम् । प्रेक्षतामत्र वत्सा यथेच्छं रुक्मिणी ।

६ एवं भवतु ।

७ कृष्णदेव ! गृहाणैतत् तव करकमले कमलसनाथे किमपि निपतितम् ।

**कृष्णः**—( गृहीत्वा विभाव्य ) कथं रुक्मिणीरूपकसनाथं मदीयरूपकालेख्यमिदम्। प्रियंवद ! पश्य पश्य।

**प्रियं०**—( चित्रपटं निरूप्य ) देव! तुह आलेक्खसमीवे रुप्पिणी एसा आलिहिदा।[1]

किं विहरसि हरिहत्थे मह करकमलस्स अवसरो एत्थ।
इअ तुअ पाणिं पत्ता एसा कमलं वधाडेई ॥ ७ ॥

( सौधमालोक्य प्रत्यभिज्ञाय सहर्षोल्लासम ) कन्हएव ! रुप्पिणीए एदं सोहं। णूणमिणं रुप्पिणीहत्थादो पब्भट्टं।

**कृष्णः**—( सोत्कण्ठमूर्ध्वं सौधाग्रप्रहितलोचनो रुक्मिणीं गवाक्षलम्बितमुखीं विलोक्य प्रत्यभिज्ञाय सहर्षोत्कण्ठम् ) नूनं रुक्मिणीयं, संवदत्यालेख्यम्। ( निर्वर्ण्य )

उपरचितकलङ्कः कुन्तलैर्लम्बमानैः
कनकरुचिकपोलं कौङ्कुमीभिः प्रभाभिः।
उदयगिरिदरीतः प्रोल्लसद्बिम्बमिन्दो—
रनुहरति सुदत्याः पीनलावण्यमास्यम् ॥ ८ ॥

( रुक्मिणी सव्रीडमास्यमाकुञ्चयति )

**कृष्णः**—( सानुतापं दीर्घमुष्णं च निःश्वस्य )

उपोषितः शारदचन्द्रबिम्बे
चक्षुश्चकोरः प्रजिघाय तूर्णम्।
कष्टं विधिर्निष्करुणस्वभावः
पिधानमुत्पादयते घनेन ॥ ९ ॥

**रुक्मिणी**—( स्वगतं सानुतापम् ) हअलज्जे अम्ह गुरुअणादो अहिअं तुमं णिक्करुणा, जं तए दंसणमेत्तम्मि पिअस्स सुहअस्स विग्घिदं।[2]

**सुबुद्धिः**—वत्से रुक्मिणि ! किं पुनरपसृतासि।

---

१ देव ! तवालेख्यसमीपे रुक्मिणी एषा आलिखिता।
किं विहरसि हरिहस्ते मम करकमलस्य अवसरः अत्र।
इति तव पाणिं प्राप्ता एषा कमलमिव निस्सार यति ॥
कृष्णदेव ! रुक्मिण्या एतत् सौधम्। नूनमेतद् रुक्मिणीहस्तात् प्रभ्रष्टम्।

२ हतलज्जे अस्माकं गुरुजनादधिकं त्वं निष्करुणा, यत्त्वया दर्शनमात्रे प्रियस्य सुभगस्य विघ्नितम्।

रुक्मिणी—( सव्रीडस्मितम् ) मअरंदिआहत्थादो चित्तवट्टं णिवडिदं गहिऊण ( सगद्गदम् ) केणवि उड्ढमुहं पुलोइदं[1] ।

सुबुद्धिः—( सस्मितं गवाक्षे वीक्ष्य अपसृत्य साशङ्कम् ) सम्प्रति सर्वासामनवसरः संवृत्तः । आयातो महाराजभीष्मकः कृष्णपुरतः ।

( ततः प्रविशति रथारूढो भीष्मकः )

भीष्मकः—( कृष्णं निरूप्य स्वगतं सानुतापम् )

इदं रूपमिदं शौर्यमिदं शीलमिदं वयः ।
रुक्मी कृष्णमनुक्राम्यन्रुक्मिणीं हृतवान्हठात् ॥ १० ॥

( नेपथ्ये सोपहासम् )

बालः कुमारोऽयमहो मरालीं पारावतायार्पयति प्रसह्य ।
एषा पुनर्मन्मथमन्थराङ्गी मरालमेवाश्रयते जवेन ॥ ११ ॥

भीष्मकः—( स्वगतम् ) अये ! केनापि कुमारक्रीडामुपहसता सदुपश्रुतिरियं व्याहृता सम्बोधयति माम् । क्व पुनरेतदर्थस्य सम्भवः । अथवा दुर्विज्ञेया दैवगतिः ।

( नेपथ्ये )

अयि बन्दिनः ! पठत पठत राज्ञां कृते मङ्गलाशिषः ।

बन्दी—( सगर्वहर्षम् )

बिभ्रद्दोस्तम्भदैर्घ्यं द्विषदवनिभुजां खर्वयन्गर्वमुद्रां
हस्तन्यस्तोग्रशार्ङ्गश्चरणकमलयोः क्षिप्तदृप्तप्रवीरः ।
उन्मीलच्चक्रधारः सततविघटितामर्त्यकान्ताश्रुधारो
राजा वां पातु युष्मान्दलदलितमहादैत्यवृन्दो मुकुन्दः ॥ १२ ॥

अपि च—

जयति घटितस्तैर्दम्भोलेर्हरिः परमाणुभि-
र्विनयविमुखक्षोणीनाथप्रमाथविधित्सया ।
निबिडनिबिडं लावण्यौघैर्भृतो विधिनाऽथवा
सजलजलदश्यामः श्यामामनोहरणक्षमः ॥ १३ ॥

सुबुद्धिः—( श्रुत्वा स्वगतम् ) अलं मनःशब्देन । श्यामाहरणक्षम एव भवतु ।

---

१ मकरन्दिकाहस्ताच्चित्रपटं निपतितं गृहीत्वा केनापि ऊर्ध्वमुखं प्रलोकितम् ।

भीष्मकः—(स्वगतं साशङ्कम्) अये ! किमपि साभिप्राय इव बन्दी पठति। किंचिदङ्कुरितक्रोधा राजानः। तदग्रत एव नीत्वा कृष्णमावासयामि तावत्। (प्रकाशम्) अयि कृष्णदेव ! इमां रथ्यां कृतार्थयता भवता समलङ्क्रियतां शिबिरसन्निवेशः। अयि सारथे ! प्रवर्त्तय रथम्। अहमनुचरो भवामि।

कृष्णः—(सप्रश्रयम्) यथा रोचतेऽत्रभवते। दारुक ! प्रवर्त्तय रथम्।

(इति निष्क्रामति)

भीष्मकः—(स्थित्वा) कथं सुमन्थरः शिशुपालरथः। कथमयमापात्येव शिशुपालाग्रतो रुक्मी। तदहं कृष्णमेवानुयामि। (इति निष्क्रान्तः)

(ततः प्रविशति शिशुपालो रुक्मी च)

रुक्मी—(सहर्षोल्लासं पार्श्वमवलोक्य) अयि बन्दिन् ! किं न पठसि महीमहेन्द्रं चेदीन्द्रम्।

बन्दी—(सगर्वमुच्चैःकारम्)

विचित्रासुत्पन्नां विकृतिमिव तां जन्मसमये
विहायास्ते यद्यप्यपरनरतुल्योऽयमधुना।
विरूपाक्षो युद्धे तदपि बहुबाहुः स्मरहरो
नरेन्द्रैराराध्यो जयति दमघोषस्य तनयः॥ १४॥

सुबुद्धिः—(श्रुत्वा सौत्सुक्यम्) सर्वाः समेता दृश्यतां गवाक्षेण शिशुपालः।

(इति तथा कुर्वन्ति)

सुवत्सला—भअवदि ! का उण एदस्स जम्मसमअम्मि विइदी आसि[1]।

सुबुद्धिः—एवमनुश्रूयते। चतुर्बाहुस्त्रिनेत्रोऽयमुत्पन्नः। कृष्णस्यास्य क्रोडे प्रविष्टो द्विबाहुर्द्विनेत्रो बभूव। कृष्णः किलास्यान्तकरो भविष्यतीति तदा दैवविद्भिरादिष्टम्।

रुक्मिणी—(सभयम्) भअवदि ! किं एस रक्खसो कोवि[2] ?।

सुबुद्धिः—एवमेव।

---

१ भगवति ! का पुनरेतस्य जन्मसमये विकृतिः आसीत्।
२ भगवति ! किमेष राक्षसः कोपि ?।

**रुक्मिणी**—भअवदि ! वेवदि मह हिअअं, ता ण इध चिट्ठिस्सं[1]। ( इति वेपमाना अपसरति )

**सुबुद्धिः**—( सवात्सल्यम् ) वत्से रुक्मिणी ! किमेवमुद्विग्ना वेपसे ? । कुतो भयं मधुकैटभारिवल्लभायाः ? ।

**रुक्मिणी**—( सास्रम् ) अयि भअवदि ! सुट्ठु भीदम्हि । ण जाणे किं किं इध भविस्सदि । कह मह हआसाए णिव्वहणं भविस्सदि[2] ।

**सुबुद्धिः**—( रुक्मिण्याश्चिबुकमुन्नमय्य ) वत्से ! समाश्वसिहि समाश्वसिहि । निर्वहणोन्मुखस्तव मनोरथः । किमहं दाम्भिका, किमसत्या ? । शीघ्रा मन्त्रसिद्धिः । किं त्वयि मन्दानुरागो मुकुन्दो मन्दशक्तिर्वा ? । एतावत्यपि कष्टसङ्कटे दुर्विनीतेन भ्रात्रा रुक्मिणा पातितासि ।

**शिशुपालः**—( स्वगतं सोत्कण्ठं सानुतापं समन्ततोऽवलोक्य ) अहह वृथाद्य बभूवास्माकं नगरविहारकुतूहलेन । तथाहि—

इह नगरमृगाक्ष्यो वीक्षिता एव बह्वयः
क्वचिदपि न स दृष्टो रुक्मिणीवक्त्रचन्द्रः ।
धवलभवनमालामिन्दुशून्यामिव द्यां
परिहरति चकोरस्येव चक्षुर्ममार्त्तम् ॥ १५ ॥

अहह ! समरोपमर्दमर्दितानेकरिपुप्रवीरं मामपि किङ्करीकरोति कुसुमायुधः । अथवा—

सौन्दर्यसारैव न रुक्मिणी सा
शौर्येऽपि तस्याः परमः प्रकर्षः ।
बलेन यस्याः कुसुमायुधो मां
चेदीन्द्रमुन्मथ्य वशीकरोति ॥ १६ ॥

( नेपथ्ये )

भवति सुबुद्धिके ! आदिष्टोऽस्मि देव्या यथा किल भवता भगवतीं सुबुद्धिं विज्ञप्य विवाहपूर्वकालाचारप्राप्तेन्द्राणीपूजार्थं वत्सा रुक्मिणी त्वरितं देवायतनं प्रापयितव्या । तदत्रभगवती रुक्मिणीमादाय समेतु ।

---

१ भगवति ! वेपते मे हृदयं, तन्नात्र स्थास्यामि ।

२ अयि भगवति ! सुष्ठु भीतास्मि । न जाने किं किमत्र भविष्यति । कथं मम हताशाया निर्वहणं भविष्यति ।

**सुबुद्धिः**—( श्रुत्वा ) वत्से रुक्मिणि ! एह्येहि साधयामः ।

**रुक्मिणी**—( सास्रम् ) भअवदि ! अणुमण्णसु मम मरणमहूसवं तुह प-हावेण लद्धसग्गगई तहिं य्येवं इंदाणिं अच्चइस्सं[1] ।

**सुबुद्धिः**—इन्द्रावरजजाया युक्तमेव । यातरमिन्द्राणीमिह स्थिता नित्यमर्चयिष्यति ।

**रुक्मी**—( स्वगतम् ) कथमम्बायाः कञ्चुकी रुक्मिणीमिन्द्राणीपूजार्थ-माह्वयते । तदहं शिशुपालं त्वरितपदमेव शिबिरं प्रापयामि । ( प्रकाशम् ) चेदी-न्द्र ! त्वर्यतां त्वर्यतां पुनर्विवाहवेला समासन्ना भविष्यति ।

**शिशुपालः**—( सहर्षौत्सुक्यम् ) सारथे ! त्वरय त्वरय रथम् ।

( सारथिः तथा करोति )

**शिशुपालः**—( वामाक्षिस्पन्दनं सूचयित्वा स्वगतं सविषादम् ) आः ! किमेतत् !
( आकाशे लक्ष्यं बद्ध्वा )

प्राप्ते प्रसादसमये स मतोऽद्य कामो
वामं हहा ! स्फुरति किन्नु विलोचनं मे ।
जातोऽस्मि वा निबिडतल्लयवामितोऽहं
सा रुक्मिणी भवतु तत्सुनिमित्तमेतत् ॥ १७ ॥

**रुक्मी**—सारथे ! त्वर्यतां त्वर्यताम् ।

( इति निष्क्रान्तः )

**रुक्मिणी**—( निःश्वस्य ) वारेदु मुहुत्तमेत्तं भअवदी वच्छलदाए मह जीवं णीहरंतं[2] ।

**सुबुद्धिः**—वत्से कृष्णवल्लभे ! निवारितासि कृष्णाज्ञया मा पुनरमङ्गलं व्याहर । पूर्णमनोरथा एहि तावत् ।

( इति निष्क्रान्ताः सर्वे )

**तृतीयोऽङ्कः ।**

---

१ भगवति ! अनुमन्यस्व मम मरणमहोत्सवम् । तव प्रभावेण लब्धस्वर्गगतिः तत्रैवैन्द्राणीमर्चयिष्ये ।

२ वारयतु मुहूर्त्तमात्रं भगवती वत्सलतया मम जीवं निस्सरन्तम् ।

# चतुर्थोऽङ्कः ।

( ततः प्रविशति रथारूढः सात्यकिः सारथिश्च )

सात्यकिः—( सहर्षाश्चर्यम् ) अहह ! रुक्मिण्यास्तदानीमवस्थासङ्करः । तथाहि सा—

> सरभसमनाः कृष्णं लब्ध्वा चिरादभिकाङ्क्षितं
> प्रसभहरणव्यापारेण प्रसृत्वरसाध्वसा ।
> ककुभि ककुभि भ्राम्यन्नेत्रा सुबुद्धिसुवत्सला—
> व्यतिकरनिरातङ्का भूयः सुखं रथमभ्यगात् ॥ १ ॥

मयाऽपि साधु कृतं, यत्कृष्णदेवः समरसंमर्दबद्धग्रहः सप्रणाममभ्यर्थ्य पुरतः प्रस्थापितः । कुसुमसुकुमारमना हि रुक्मिणी बन्धुवर्गकदनकष्टसाक्षिणी न जाने कथं भवेत् । अत्र च—

> कन्यान्तःपुरचारिणो नृपजनास्ते खर्वकुब्जादयो
> विप्रास्ते च पुलोमजार्चनविधौ सोल्लासमभ्यागताः ।
> मिथ्यास्त्रित्रिविक्रमाः परिहृताः स्मेरेण दूरं मया
> स्तोकस्तोकभटप्रमाथविधिना तृप्तः कृपाणो न मे ॥ २ ॥

तदहमिदानीं रुक्मिशिशुपालप्रमुखसरोषधाविताऽरिवर्गविनिवारणव्यग्रान्बलदेवादीनुपसर्पामि । सारथे ! त्वरय त्वरय रथम् ।

सारथिः—( तथा कुर्वन्पुरोऽवलोक्य ) आयुष्मन् युयुधान ! कथमयं बलदेवः सबलो व्यावृत्त इतोऽभिमुख एव दृश्यते ।

सात्यकिः—( विभाव्य साशङ्कम् ) आः ! किमेतत् । किमयं रुक्मिशिशुपालादीन्व्यापाद्य पुरोन्माथाय धावितस्तदुपसृत्य निवारयामि ।

( ततः प्रविशति बलदेवः )

सात्यकिः—( सप्रणामम् ) अयि वीराधिराज राम ! किमेतदारभ्यते ? । व्यापादितेषु शिशुपालादिषु अलमिदानीमनपराधिनो भीष्मकस्य पुरप्रमाथेन ।

बलभद्रः—सात्यके ! केन ते व्यापादिताः कस्य लोचनगोचरतां गताः ? ।

सात्यकिः—( सवितर्कम् ) बलदेव ! न ते वीराभिमानिनः पलायन्ते । नूनं

बद्धक्रोधाः कृष्णमनुधाविताः । तदलं विलम्बेन । एहीमां कृष्णानुगतामाशामुपसर्पामः । ( इति तथा कुर्वन्ति )

बलदेवः—( पुरोवलोक्य सहर्षम् ) सात्यके ! फलितस्तव तर्कः । दृष्टास्ते दुष्टाः ।

सात्यकिः—( ससंरम्भम् ) ये बलदेवेन दृष्टाः कालेन ते दृष्टाः ।

बलदेवः—( सानुतापम् ) अहह ! प्रत्यासन्ना एव किन्तु पराङ्मुखाः । कथमिमान्सपत्राकरोमि !

सात्यकिः—तिष्ठ ! तिष्ठ ! अहमिमान्संमुखीकरोमि । ( साक्षेपमुच्चैः )

रे रे रुक्मिन्त्रथमयपदैर्लङ्घ्यते किं कृतान्तः
केनाख्यातं तव रणपरित्यागतो दीर्घमायुः ।
तं सद्वीरं स्मरसि न यदि क्लीबवंशं स्वकीयं
क्षत्राराध्यं करतलगतं वीक्षसे किं न खड्गम् ॥ ३ ॥

बलभद्रः—( सरोषाक्षेपम् ) रे रे शिशुपाल बालिश ! पलायनपरः किमिति भयव्याकुलो विमलक्षत्रकुलाचारमतिक्रामसि ? । पश्य रे पश्य—

शौर्ये ......दृढपदस्तिष्ठ धिक्कातरत्वं
जित्वा शत्रून्भज भवसुखं भिन्धि वा भानुबिम्बम् ।
तिष्ठन्नग्रे प्रणमितशिराः पापचापस्त्वदीयः
पाणिं रुन्धन्भुवमिति महावंशजो याचति त्वाम् ॥ ४ ॥

अपि च—

रे रुक्मिबान्धवनृपाः परमः क्रमो वः
सम्बन्धिनो वयममी भवतोऽभ्युपेताः ।
अस्माभिरैक्यमधिगम्य रणोत्सवेऽस्मि-
न्नासूत्र्यतां विशदबाहुमदोपयोगः ॥ ५ ॥

सात्यकिः—( पुरोऽवलोक्य सहर्षोल्लासम् ) बलदेव ! दिष्ट्या वर्धसे । त्वद्वचनपाशाकृष्टौ व्यावृत्तौ रुक्मिशिशुपालौ ।

( ततः प्रविशतो रुक्मिशिशुपालौ )

शिशुपालः—( सगर्वोपहासम् ) अयि बलदेव ! किमुच्यते भवतः सौभ्रात्रं, यत्कृष्णाय धावितमपमृत्युमाहूयात्मनि पातयसि ।

**रुक्मीः**—( सगर्वम् ) अयि चेदीन्द्र ! मैवम् । अस्माकमेव यत्क[illegible]मनु-कृष्णमरणमित्ययं क्रममृत्युलक्षणः सौराज्यधर्मो पालयितव्य एव ।

**बलभद्रः**—( सक्रोधम् ) अयि शिशुपाल ! क्व मे सौभ्रात्रम् ? ।

प्रतापप्राबल्योदयिनि रणदुर्भिक्षसमये
भवान्भक्ष्यः प्राप्तो मधुमथनखड्गस्य परमः ।
स्वबाणानां भोक्तुं तमपि वितराम्याशु यदहं
फलं बन्धुप्रीतेस्तदुचितमहो किन्नु विदितम् ॥ ६ ॥

**रुक्मी**—( बलभद्रं विभाव्य स्वगतम् ) अये ! हलमस्य महायुधम् । तदेवं तावत् । ( प्रकाशं सावज्ञहासम् ) अयि बलभद्र ! बालिशोऽसि । किमस्मिन्दुःसञ्चरे सङ्गरवर्त्मनि प्रवर्त्तसे ।

नदीं मुग्धां कष्टुं प्रभवसि परं सूर्यतनयां
प्रलम्बं विच्छेत्तुं त्वमसि तृणमुच्छृङ्खलबलः ।
समिद्भूमिः सेयं विषमविषमा लोहकठिना
कृतेऽप्यत्रायासे हलधरहलं निष्फलमिदम् ॥ ७ ॥

अपिच—

बलभद्र ! बलीवर्दो लाङ्गलं चालयन्भवान् ।
यशः कतममस्माभिर्लभ्यते तद्विपाटनात् ॥ ८ ॥

**शिशुपालः**—रुक्मिन् ! भद्रं भद्रमायातमस्मासु । आकर्णय दुन्दुभिम् । अस्मदीयसमरदुन्दुभिश्रवणानन्तरमेव व्यावृत्तः कृष्णः ।

**रुक्मी**—( कृष्णदुन्दुभिध्वनं प्रत्यभिज्ञाय सहर्षम् ) प्रियं प्रियं नः । पूर्यतां पूर्यतामिदानीं कियत्यपि सङ्गरप्रत्याशास्माकम् ।

**बलभद्रः**—सात्यके ! किं कृतमिदं कृष्णेन ।

**सात्यकिः**—समरदुन्दुभिमाकर्ण्य कथन्नु तिष्ठेत्कृष्णः ? । नहि नहि केसरी कुञ्जरारावमाकर्ण्य विलम्बते ।

( ततः प्रविशति कृष्णो रुक्मिणी सुबुद्धिः सुवत्सला च )

**कृष्णः**—( साक्षेपम् ) अयि दारुक ! अतिकातरोऽसि मिथ्याहितोऽसि यत्तव कृपणपाणितोऽपि निष्ठुरमुष्टिग्रहौ रथाश्वरश्मिषु पाणेः ।

साङ्कर्षणं मा ग्लपयस्व गात्रं
विपक्षबाणैस्त्वरयास्मदश्वान् ।
कृष्णस्य सांसिद्धिककृष्णकान्ते-
र्मा दुर्यशःकार्ष्ण्यमुदेतु घृण्यम् ॥ ९ ॥

दारुकः—( सभयं सप्रश्रयम् ) एष मुञ्चामि रथरश्मीन् । पश्यतु देवः साम्प्रतम्—

अभ्येति समरभूमिः प्रत्यासत्तिं क्षणेन देवस्य ।
सम्मुखमुपसर्पन्त्या बद्धस्पर्द्धेव जयलक्ष्म्याः ॥ १० ॥

रुक्मिणीः—( सविषादमपवार्य ) भअवदि ! दिट्ठा मए अणुग्गहसिद्धीए तुह मंतसत्ती । ता संपइ विग्गहसिद्धीए दंसेसु । उचिदं खु मह बंधुवग्गावसाणकारणेण मरणेण णिग्गहणं[1] ।

सुबुद्धिः—वत्से रुक्मिणि ! समाश्वसिहि समाश्वसिहि । न मे अत्र कापि मन्त्रशक्तिः ।

तवैव रूपसौभाग्यसम्पदेषा विजृम्भते ।
मा विषीदानया भावि सर्वं निर्वहणं शुभम् ॥ ११ ॥

दारुकः—देव ! प्राप्तो रथस्तव प्रत्यर्थिरथान् । सज्जय शार्ङ्गम् ।

कृष्णः—( सारङ्गं गृह्णन् रुक्मिणीमवलोक्य ) प्रिये ! किमाकुलासि ? । भविष्यसि बन्धुमती कल्याणपरम्परापात्रम् । एष शमयाम्यनिष्टम् ।

( रुक्मणी समाश्वस्य सव्रीडमधोमुखी तिष्ठति )

कृष्णः—( पुरोऽवलोक्य ) कथमयं शिशुपालो बलदेवस्यन्दनमनुधावति ? । ( साक्षेपम् ) आः तिष्ठ तिष्ठ ।

मा मूढ ! झम्पां कुरु वाडवाग्नौ
चेदीन्द्र ! मा रोषय रौहिणेयम् ।
अस्मिन्मनागप्यधिरूढरोषे
कालस्य पुर्यां परमस्ति वासः ॥ १२ ॥

---

१ भगवति ! दृष्टा मया अनुग्रहसिद्ध्या तव मन्त्रशक्तिः । तत्सम्प्रति विग्रहसिद्ध्या दर्शयतु । उचितं खलुं मम बन्धुवर्गावसानकारणेन मरणेन निग्रहणम् ।

**शिशुपालः**—( रथं परावर्त्य सक्रोधम् ) रे रे कृष्ण ! परतः परतो भव । न भवानस्मद्विधसधीरोद्योगयोग्यः । तथाहि—

इन्द्राणीचरणार्चनापरिकरव्यापारितां कन्यकां
विश्वासोपगतां हरे ! यदहरस्त्वं जन्ययात्रागतः ।
धर्मः किं चरितस्तदेव भवता क्षत्रव्रतं किंनु वा
किं वा बन्धुजनोचिता व्यवहृतिर्लोकस्थितिः कापि वा ॥ १३ ॥

**कृष्णः**—( सव्याजं विहस्य ) युज्यते युज्यते ।

चैतन्यात्प्रभृति प्रवृत्तपरमप्रेमोदयां सुन्दरीं
मध्यां देहविसर्जने कृतवतीं मद्विप्रयोगे दृढाम् ।
कन्यां खड्गबलोदयेन कलयन्नार्हामि गर्हामहं
श्लाघ्यस्त्वं शिशुपाल ! निस्त्रपमुपालम्भानिमान्व्याहरन् ॥ १४ ॥

**शिशुपालः**—( सावज्ञोपहासम् ) कृष्णवीर ! एवमेवैतत् । उपालम्भदानमात्रोद्योगा वयमपर्याप्ताः । त्वमेकः शौर्यशालिषु धुर्यः । तथाहि—

व्यालं निर्जितवान्खरं दलितवानुक्षाणमाजघ्निवा-
नश्वं खण्डितवानिति व्यवसितिश्रेण्यैव धन्यो भवान् ।
एतद्विक्रमयुग्मतद्भुततमं कः स्तोतुमीशोऽस्ति ते
यत्कंसः प्रभुराहतो यदपि च व्यापादिता पूतना ॥ १५ ॥

**सात्यकिः**—कृष्ण ! कृष्ण ! व्याहरतु व्याहरतु चेदीन्द्रः । सोढव्यमस्यागःशतम् ।

**शिशुपालः**—( सक्रोधम् ) अरेरे ! आगःशतावधेरक्षितोऽहम् । पश्यत पश्यत ।

आगःशतं किमिव तद्विदधेऽद्य घोर-
मागःसहस्रशतजित्वरमेकमागः ।
यत्कृष्णमन्यवनिताकपटापहार-
वीरं विपाट्य वितरामि रणे शिवाभ्यः ॥ १६ ॥

**बलभद्रः**—( सक्रोधम् ) अयि शिशुपाल ! सङ्गरकर्मकुणे पश्यदन्धदुरक्षरोदाहरणचतुरं मुखमेव तवावयवेषु प्रगल्भम् ।

यद्बाहुद्वितयं तदाविकलितं चक्षुर्यदस्तं गतं
तेषामस्ति न दुर्यशःपरिचयः स्तोकोऽपि पुण्यात्मनाम्।
दोषौ ते दमघोषपांसनमहादोषाविमौ साम्प्रतं
नेत्रद्वन्द्वमिदं च सङ्गरजयाह्लादो न यैर्लभ्यते ॥ १७ ॥

तदलं निमन्त्रितायातनिरपराधिनरेन्द्रवृन्दकदनकौर्यबाहुल्येन आगच्छतं युवां शिशुपालरुक्मिणौ समरोपमर्दक्षमां मेदिनीम्।

**रुक्मी**—(अपवार्य) अयि चेदीन्द्र! प्रकटसमरकेलिदुःशिक्षितावेतौ बलदेवगोविन्दौ। तदेवं तावत्। (कर्णे एवमेव प्रकाशं सक्रोधम्) आः! किमेकेन रामेण। आगच्छतं रामकृष्णौ। यावआवां समरभूमिम्। (इति तथा कुरुतः)

(नेपथ्ये)

आश्चर्यमत्यहह! काचिदकर्तृकैव
नाराचवृष्टिरियमम्बरतः पतन्ती।
तारुण्य एव तरणेरयमप्युदञ्चन्
कार्त्तान्तिकासरगलच्छविरन्धकारः ॥ १८ ॥

(पुनर्नेपथ्ये)

पश्यत स्यन्दनौ शून्यौ तौ गतौ मुखरौ क्वचित्।
अधिकं युध्यते चित्रं सैन्यमेतदनायकम् ॥ १९ ॥

**कृष्णः**—(श्रुत्वा स्वगतम्) नूनमम्बरगतौ रुक्मिशिशुपालौ मायायुद्धवैदग्ध्यं दारुणं विस्तारयतस्तदहं पन्नगाशनस्यन्दनमारूढो वियतस्तौ पातयामि। (प्रकाशम्) भगवति सुबुद्धे! भद्रे सुवत्सले! लालनीया तावद्भवतीभ्यां रुक्मिणी यावदहमिममनर्थं निवारयामि।

(रुक्मिणी सव्रीडं भवि[illegible]मुखी तिष्ठति)

**सुबुद्धिसुवत्सले**—विजयतां वीरः।

(कृष्णो ध्यानं नाटयति)

**अक्रूरः**—(ऊर्ध्वमवलोक्य साश्चर्यम्)

किं शातकुम्भगिरिरेष गृहीतपक्षः
किं पावकः प्रसरदुग्रशिखाजटालः।
देवः स एव किमयं महसामधीशः
संहर्तुमेति तिमिराण्यतिमेदुराणि ॥ २० ॥

**बलभद्रः**—( ससम्भ्रमम् ) नूनमयं दुर्वृत्तविद्विषां प्रपञ्चस्तदेनमन्तरिक्ष एव निकृन्तामि निशितेषुणा । ( इति चापमारोपयति )

**कृष्णः**—( ससम्भ्रमम् ) आर्यबलदेव ! तिष्ठ तिष्ठ तार्क्ष्योऽयं मयाऽनुस्मृतः समायाति । एनमारुह्य व्योमचरौ निगृह्णामि परिपन्थिनौ ।

( ततः प्रविशति तार्क्ष्यः )

**तार्क्ष्यः**—( सप्रणामम् ) अनुगृह्णातु मामादेशदानेन देवकीनन्दनः ।

पक्षानिलैः प्रसभमम्बुनिधीन्धुनोमि
त्वं चेदधोभुवनजिष्णुतयोत्सुकोऽसि ।
उत्कण्ठितोऽसि यदि तेषु तदानयामि
तानिन्दुशेखरविरिञ्चिपुरन्दरादीन् ॥ २१ ॥

**कृष्णः**—( सहर्षं सस्मितम् ) एहि तावत्त्वया ''न तावम्बरसमराङ्गणचारिणौ मायामहारथौ विचिनोमि तौ प्रत्यर्थिनौ ।

**तार्क्ष्यः**—कुरु यथाकामम् । ( इति कृष्णं पृष्ठमारोप्य गगनारोहणं नाटयति ) ( सर्वेसाश्चर्यमालोकयन्ते )

**अक्रूरः**—अहह ! पश्यत पश्यत ।

एष प्रतीच्छन्निशितेषुधाराः
स्वर्णातपत्रीयति पक्षिराजः ।
अस्योपरिष्टात्स्फुरदिन्द्रनील-
कुम्भायतेऽसौ मधुकैटभारिः ॥ २२ ॥

**बलभद्रः**—( विलोक्य ससम्भ्रमम् ) आः ! किं पुनरारूढविष्णुर्विष्णुरथोऽयं द्रागवतरति । किं दुष्प्रवेशमम्बरं शरासारैः ? । ( साट्टहासं विहस्य ) किमलसं मुशलं बलदेवस्य गगनाग्रारोहणे ? ( इति मुशलमास्फालयति )

**सात्यकिः**—बलदेव ! आकर्णय आकर्णय तावत् । किमपि श्रूयत एव ।

( सर्वे आकर्णनाभिनयं नाटयन्ति )

( नेपथ्ये )

मा मुञ्च मा पीडय गाढभङ्ग्या
त्वं तार्क्ष्य ! दाक्ष्यात्सुतवद्गृहीत्वा ।

अभङ्गमेवाङ्गमिमौ वहन्तौ
स्ववर्गवीरेषु समर्प्य गच्छ ॥ २३ ॥

बलभद्रः—कथं मुक्तौ दुर्वृत्तौ मुरारिणा ?।

अक्रूरः—राम ! समरविजयादेष समधिको विजयः।

सात्यकिः—आकर्णयत पुनः किमपि श्रूयते।

( सर्वे आकर्णनाभिनयं कुर्वन्ति )

( नेपथ्ये )

रुक्म्यसौ रुक्मिणीभ्राता चेदीन्द्र त्वं च मामकः।
अपि दुर्णयदुःशीलौ लालनीयौ युवां मम ॥ २४ ॥

सुबुद्धिः—( श्रुत्वा सहर्षम् ) वत्से रुक्मिणि ! द्विगुणमिदानीं दिष्ट्या वर्द्धसे, यत्त्वया हृदयदयितो दैत्यारिरासादितः। यच्च करुणारसपूराप्लावनिर्वाणरोषानलेन न तेन त्वद्भ्राता दग्धः।

( रुक्मिणी सहर्षमास्ते )

बलभद्रः—( पुरोऽवलोक्य सहर्षम् ) कथमयं वैरिविसर्जनाय वैनतेयं समादिश्य पदातिरेव दामोदरोऽभ्युपैति !।

प्रमुदितसुरवृन्दोन्मुक्तमन्दारमाला-
मिलितमधुपवन्दिश्रेणिभिः स्तूयमानः।
अधिगतजयलक्ष्मीरप्रवृत्तोऽरिनाशे
जयति जयति शौरिः शौर्यकारुण्यमूर्त्तिः ॥ २५ ॥

( ततः प्रविशति यथानिर्दिष्टो वासुदेवः )

वासुदेवः—( साकूतस्मितम् ) आर्यराम ! असह्यसमरोपमर्दौ तौ वीरौ सन्धाय मया प्रहितौ।

बलभद्रः—( साकूतं विहस्य ) एवमेव बलीयसा सह युज्यते। तदिदानीं निर्व्यूढानि समीहितानि। समारोहतु भवान्द्वारकोपगमनाय स्यन्दनम्।

( कृष्णः उपसृत्य रथावरोहणं नाटयति )

दारुकः—( सप्रणामम् ) विजयतां विजयतां देवः।

सुबुद्धिः—अयि कृष्णवीर ! न तावदाशीभिः पर्याप्यते यावत्त्वया निर्व्यूढम्। तत्त्वयि प्रणाम एव श्रेयान्।

कृष्णः—( सप्रश्रयम् ) भगवति ! त्वदनुग्रहोऽयं विजृम्भते।

सुवत्सला—जअदु जअदु देवो[1] ।

( रुक्मिणीविनम्रमुखी तिष्ठति )

कृष्णः—( सोत्कण्ठं सानुतापम् )

आयुष्यमिन्दुमुखि ! वैरिनरेश्वराणा-
मद्यापि किं वहसि भामिनि ! वैमनस्यम् ।
यत्कातरेण तरलाक्षि ! मया प्रियोऽपि
मुक्तः प्रिये समरकेलिरसोपभोगः ॥ २६ ॥

( रुक्मिणी सहर्षोत्कण्ठं सव्रीडमधोमुखी तिष्ठति )

सुबुद्धिः—( साश्चर्यम् ) कृष्णदेव ! पश्य पश्य—

मिहिरमहसां न क्रूराणामियं रमणीयता
नहि नहि तडित्पूरोऽपीदृग्भवेत्क्षणभङ्गुरः ।
अति मृ.................................कथमीदृशा
नभसि निकटे ज्योतिः किंचिद्विचित्रमुदीयते ॥ २७ ॥

कृष्णः—( विलोक्य साश्चर्यं सवितर्कम् ) कोऽपि किमयं माया......................भते ।

( नेपथ्ये )

वत्से सुबुद्धे ! शीघ्राऽहम् । शीघ्रं सफलीकृता मया तव शिष्याया निजाराधना । त्वं च कृष्ण ! मत्प्रियस्य नीलकण्ठस्य..............................मिव परमं प्रेमपात्रम् । तत्किं तव मयोपकर्त्तव्यम् ? । ब्रूहि । तथापि किं ते भूयः प्रियतरमस्तु । ( सर्वे सहर्षाश्चर्यं प्रणमन्ति )

कृष्णः—

देव्या एव प्रसादोऽयं साध्यः सुकृतकोटिभिः ।
सिद्धेन तेन किं साध्यं ततोऽप्यधिकमस्ति मे ॥ २८ ॥

तथापीदमस्तु—वर्षन्तु वारि रुचि ( ताभ्यधिकं पयोदाः )
वर्षन्तु सूक्तममृताभ्यधिकं कवीन्द्राः ।
वर्षन्तु हव्यभुजि साधु हवींषि विप्रा
वर्षन्तु चार्थिषु धनान्यमितानि भूपाः ॥ २९ ॥

इति श्रीरुक्मिणीहरणे चतुर्थोऽङ्कः ।

इति महाकविश्रीवत्सराजविरचित ईहामृगः समाप्तः ॥

---

[1] जयतु जयतु देवः ।

महामात्यवत्सराजविरचितरूपकसङ्ग्रहे

# त्रिपुरदाहो डिमः



परिकरितमिन्दुमौलेर्जयति शिरः स्वर्गवाहिनीसलिलैः ।
यस्मिन्नुप्तं सद्यः कुसुमं कल्पद्रुमीभवति ॥ १ ॥

पिङ्गैः कुर्वन्कुजमयमिव व्योम तुङ्गैः स्फुलिङ्गै-
र्बिभ्रद्भूमान्सुरपतिभियोड्डीयमानानिवाद्रीन् ।
मन्दाकिन्याः क्वथनमुखरं नर्त्तयन्वारिपूरं
बाणस्याग्निः स जयति पुरप्लोषकारः पुरारेः ॥ २ ॥

धूमैर्ध्यामलयन्मुखानि नयनान्याप्लावयन्नश्रुभिः
सन्तापार्तिपराभवं पृथुशिखाचक्रेण विस्तारयन् ।
हर्षोत्कर्षसमागमेऽपि दिविषद्वर्गस्य शोकोचित-
व्यापारस्त्रिपुरं दहन्विजयते भर्गस्य बाणानलः ॥ ३ ॥

( नान्द्यन्ते )

सूत्र०—( समन्तादवलोक्य )[1]

पारिपार्श्वकः—.........................द्यते भवान् ।

सूत्र०—मार्ष ! किं मामुपहससि । स एव देवोऽत्रापराध्यति । तथाहि—

अनारता दानपरम्पराभि-
र्निर्वेदमायाति कदाचिदुर्वी ।
बिभर्ति तत्पूर्वमिव प्रहर्षं
मुहुःप्रदानैः परमर्दिराजः ॥ ४ ॥

पारि०—लभतां लभताम् । नाहमीर्ष्याकालुष्यपात्रम् । किन्तु वैभवोचितं यन्न दानमारभते भवांस्तदहमुपतप्ये । तथाहि—

पुष्टापि रक्षितापि प्रयत्नतो दानविरहिता लक्ष्मीः ।
गौरिव वन्ध्या भूता भवति परं कष्टदा गृहिणः ॥ ५ ॥

सूत्र०—( सगर्वम् ) मार्ष ! प्रतीक्षस्व सूर्यचन्द्रोपरागादिपर्व । मूर्ख ! पश्यसि मे महादानानि ।

1. One palm-leaf after this is wanting in the ms.

पारि०—भाव ! को विलम्बः शंसत्युपरागाणां त्रिपुरबल[illegible]ते दैत्यवर्गे । तथाहि—

दैत्यास्ते कैटभीयाः कथनमभिलषन्त्यब्धिमध्येऽपि गौरे-
वांरंवारं हिनस्ति द्युमणिशशधरौ बाहुहीनः स राहुः ।
रुग्णे गीर्वाणवर्गे त्रिपुरपरिभवैः सोऽपि पातालमूला-
ज्जाने कैरप्यहोभिर्बलिरिह बलवानेष्यति ध्वस्तबन्धः ॥ ६ ॥

( नेपथ्ये सोपहासम् )

युज्यते युज्यते तवैतत् । चारणा हि दुरुदाहरणदोहदैर्विरोधविषवल्लीं वर्द्धयन्तो दुर्बलान्बलिष्ठैर्घातयन्ति ।

पारि०—( सभयम् ) भाव ! कोऽयमकारणं कुप्यति ? ।

सूत्र०—( स्वरप्रत्यभिज्ञामभिनयन् ) एष विरञ्चिनन्दनो महामुनिर्नारदः ।

पारि०—( सोपहासम् ) अहो ! मुनेरुपशमशीलता ।

सूत्र०—(विहस्य) स्वभाव एवायमस्य । किन्न जानाति भवान् ? । तथाहि—

न वीणा प्रीणाति श्रुतिपुटसुखैग्रामघटना
स्वराभोगः साम्नामपि च न तथा पुष्यति सुखम् ।
मिथःक्रूरक्रोधग्रथितपरुषालापबहलः
कलिः प्रह्लादाय प्रभवति यथा नारदमुनेः ॥ ७ ॥

तदयं कलहावलोकनकुतूहली स्वयं च क्रोधनो दूरत एव नमस्यः । एह्यावां निजनियोगमनन्तरकरणीयं सम्पादयावः ।

( इति निष्क्रान्तौ )

## प्रस्तावना

( ततः प्रविशति नारदः )

नारदः—( ससंरम्भं समन्तादवलोक्य ) कथं न कोऽप्यत्र ? । अहो धाष्ट्यं मिथ्योक्तिवाचाटस्य नटस्य ! । तथाहि—

त्रिशूललीलायितमन्धकारे-
र्ध्यायत्सु चक्राक्रमणं मुरारेः ।

भयज्वराटोपपचेलिमेषु
दैत्येषु शौर्यस्य लवः कदासीत् ॥ ८ ॥

अथवा नटोयं किमुपालभ्यते, यो राहुमपि वीरगणनायां गणयति।

( नेपथ्ये )

आः ! ब्राह्मणोऽसि। किं करोमि। निरङ्कुशरसनो व्याहर यथा यथा रोचते।

कनकशिखरिदुर्गं वज्रपाणिर्न मुञ्च-
त्युदधिसलिलदुर्गैर्जीवितो दानवारिः।
स च पितृवनदुर्गं चन्द्रचूडोऽधिशेते
सुभटभणितिशोभां युज्यते निर्जराणाम् ॥ ९ ॥

नारदः—( स्वरानुसारेण ऊर्ध्वमवलोक्य स्वगतम् ) कथमयं राहुर्व्याहरति ?। भवतु। कोऽयं वराकः।

( ततः प्रविशति व्योमयानेन राहुः। राहुः कनकशिखरीत्यादि पठति )

नारदः—( सोपहासम् ) अयि राहुवीर ! उपहसनीयैव सुभटभणितिर्दैवानाम्। तथाहि—

जम्भस्तम्भितविक्रमः सुरपतिर्मन्दोऽहदूनो रविः
सोऽऽप्यास्ते गजकृत्तिगुप्तजघनो देवस्त्रिशूलायुधः।
कृष्णः सोऽपि कदर्थितो मधुमुरप्रायैर्मुहुर्दानवैः
शौर्याशौर्यपरिस्थितिं सहृदयो जानाति राहुर्भवान् ॥ १० ॥

( राहुः साशङ्कमिव मूर्द्धकम्पेन वारयति )

नारदः—( सहासम् ) अयि सैंहिकेय ! हस्तसंज्ञया वारय।

राहुः—( सक्रोधम् )

विहस्तितां नारद ! मामकीयां
गतत्रपः किं हससि प्रहृष्टः।
करान्स्वरांशोर्हसितुं सहस्रं
न तेऽस्ति वक्त्रं मदुपद्रुतस्य ॥ ११ ॥

तदाकर्णय मे हितैषिणो वाणीम्।

मन्दं नारद ! जल्प मुञ्चसि न किं विप्रोचितं चापलं
मिथ्याहङ्कृतिजल्पितैस्तव हहा ! कुप्यन्तु मा दानवाः।

देवेष्वस्तमुपागतेषु सहसा तत्क्रोधलीलायितै-
रेषाऽन्योन्यविरोधिनी क्व नु मुने ! विद्या प्रयोज्या त्वया ॥१२॥

नारदः—(सहासम्) सैंहिकेय ! अहमप्यत एव न देवानाऽऽकोप्य दानवान्निर्मूलमुन्मूलयामि । तथाहि—

निर्मूलमुन्मूलितदानवेषु
देवेषु निर्वैरसुखप्रियेषु ।
सङ्ग्रामसंमर्दभरावलोक-
कुतूहलं स्यात्क्व नु नारदस्य ॥ १३ ॥

राहुः—(सोपहासम्) अहो ! महाहवकुतूहलित्वं महामुनेः । तदहं प्रतिग्रहान्तरनिरीहस्य पूरयामि भवतः समरावलोकनसमीहाम् ।

वराको राकायां मम कवलतामेत्यऽशरण-
स्तथा दर्शेप्यर्काश्रयमुपगतः शीतकिरणः ।
तदद्यैव क्रूरप्रसृमरकरं केवलममुं
करिष्यामि ग्रासं दिनपरिवृढं पश्यतु भवान् ॥ १४ ॥

(इति सक्रोधं निष्क्रान्तः)

नारदः—(साश्चर्यम्) अहो चण्डिमा दानवखण्डस्य । तदहं भगवतीं भागीरथीमुपास्य खण्डपरशुमुपवीणयितुमनुसरामि । तमेव देवं दानवे.. क्रोधयिष्यामि । (नभोऽवलोक्य) सुरसमूहोऽपीदानीं शिवं सेवमानो भविष्य..ति ।

(इति निष्क्रान्तः)

विष्कम्भकः

(ततः प्रविशति सुरसमूहोपास्यमानो महेशः)

महेशः—(स्वगतं साशङ्कम्) आः ! किं पुनर्विध्वंसितानिव पश्याम्यमृतान्धसः ? । भवतु पृच्छामि । (प्रकाशम्) अयि सुरगुरो ! किमेतत् ? ।

शार्कं चक्षुःसहस्रं परिवहति हिमक्लीबराजीवमुद्रां
पाशः प्राचेतसोऽयं पिशुनयति सुखध्वंसमालस्यवश्यः ।
सुसोत्साहो हुताशः कलयति सुमनःकालिमानं द्वितीयं
क्रूरां कष्टस्य काष्ठां स्फुटमभिदधति व्याकुला लोकपालाः ॥१५

बृहस्पतिः—(सोल्लुण्ठम्) किं पुनर्भगवान्सर्वज्ञो नारदवदस्मान्कन्दलाय मुखरीकर्तुमिच्छति ? । स्वयमेव वेत्तु देवः ।

( प्रविश्य सम्भ्रान्त इव )

नारदः—

नेत्रे मीलय चन्द्रसूर्यमयनस्वर्भानुरायात्ययं
प्रच्छन्नं क्रियतां गजाजिनमिदं वैरस्य संस्तारकम् ।
शूलं निक्षिप दूरतः क्वचिदिदं युद्धापराधात्मकम्
शम्भो ! तापस एव जीवतु भवान् घोरा रणे दानवाः ॥१६॥

महेशः—( सक्रोधम् )

समिति परिचितोऽहं सर्वदा सर्वदैत्यैः
कथय कथय कोऽयं नारद ! द्राङ्मुमूर्षुः ।
विरचयतु विशङ्कं नाकलोकं पिनाकः
प्रलयजलदनादस्पर्द्धिमौर्वीरवर्द्धिः ॥ १७ ॥

इन्द्रः—( स्वगतं सहर्षम् )

दिष्ट्या रौद्ररसवासितमानसो हरः संवृत्तः । साधु नारद ! साधु । पारदोऽसि विपत्पारावारस्य ।

नारदः—( पार्श्वमवलोक्य ) अयि कुण्ठकुलिश सहस्राक्ष ! किन्न विज्ञपयति भवान् ? ।

इन्द्रः—( सखेदं निःश्वस्य ) अयि महामुने ! किमहमुपहसनीयो विज्ञपयामि ? । तथाहि—

काठिन्यं कुलिशादपेत्य हृदये सत्रासमावासितं
सद्यो यन्न विदीर्यते विधुरितं दुर्दैत्यदर्पोदयैः ।
एकोप्यस्ति न मे विलोचनलवश्चक्षुःसहस्रं तनौ
नूनं चित्रमिदं हृतं मम यशो यत्पश्यतः शत्रुभिः ॥ १८ ॥

महेशः—( सोत्साहम् ) अयि जम्भशासन ! किमेवमुत्ताम्यसि ? । कियन्मात्राणि तव दम्भोलिदावानलस्य दानवकुलतृणानि ? ।

इन्द्रः—( सप्रश्रयम् )

किं गर्वगर्भभणितिव्यसनेन शस्तो
दम्भोलिरेष न तु देव ! तव प्रभावः ।
औदास्यसुस्थमनसि त्वयि दानवानां
दोर्दण्डखण्डनविधौ कतमोऽस्ति शौण्डः ॥ १९ ॥

महेशः—( सखेदम् ) अहह पुरुहूत ! किमिदं व्याहृतम् ! । स्वप्नेऽपि दिविषत्कार्येषु न स्यादुदासीन ईशानः ।

शूलं शिरःशूलकरं न कस्य
विपाककृत्कस्य न वा पिनाकम् ।
ममेन्द्रसन्देशवशंवदस्य
कं वा न कुर्यात्परशुः परासुम् ॥ २० ॥

यमः—( ससम्भ्रमम् ) आः ! किं मृतममरैर्दैत्यसमरसम्मर्दकेलिर्भगवन्तमुग्रं व्यग्रीकरिष्यति ? । अयि देवदेव ! त्वद्वरप्रदानबलमाशङ्कमानास्तत्र वयं क्लीबाः संवृत्ताः स्मः । तदिदानीम्—

मोदन्तां करपङ्कजेषु गिरिश ! स्वस्थानि शस्त्राणि ते
सङ्ग्रामश्रमकातरो नहि नहि प्रेष्योऽस्ति ते कश्चन ।
स्वैरं मे समराङ्गणे विहरतां दण्डोऽयमत्युत्कट-
त्रुट्यत्कीकसवावदूकदनुजप्रत्यङ्गभङ्गोद्यमैः ॥ २१ ॥

हुताशः—( सक्रोधमाकाशे लक्ष्यं बद्ध्वा )

अयि ज्वालाः सर्वाः प्रलयसमयाटोपविषमाः
प्रगल्भध्वं यूयं मयि झगिति सङ्ग्रामरसिके ।
मया प्लुष्टे तस्मिन्प्रथममसुरानीकविपिने
सुराणामन्येषां भवतु कुपितं भस्मनि हुतम् ॥ २२ ॥

नारदः—( सहर्षं विहस्य ) अयि वायो ! पश्य पश्य निजमित्रस्य शौर्योत्साहम् ।

वायुः—सखे नारद !

निर्मूलमुन्मूलयिताहमेव
प्रभञ्जनः प्रागसुरद्रुमौघान् ।
दहत्वथैतान्मृतमारकार-
स्तनूनपात्तापयतां रविर्वा ॥ २३ ॥

नारदः—( सहर्षम् ) दिष्ट्या वर्द्धतां वर्द्धतां धर्मः । एवमुद्धतक्रोधेषु देवेषु दानवानामम्भसि मग्नानामपि क्व जीवितम् ।

वरुणः—( सगर्वं सप्रश्रयम् )

कण्ठन्यस्तकठोरपाशविवशान्देवद्रुहो दुर्दमान्

( आत्मानं निर्दिश्य )

नेष्यत्येष निरङ्कुशो जलपतिः पातालमूलं बलात् ।

तच्छैलक्ष्यजुषो विना रणरसं भग्नप्रतिज्ञाः सुरा

न क्रुध्यन्ति यथा तथा कुरु मुने ! त्वामित्थमभ्यर्थये ॥ २४ ॥

नारदः—सखे कुबेर ! धनदोऽसि, तदिदानीं निधनदो भव विद्विषाम् ।

कुबेरः—सखे नारद !

मद्दोःस्तम्भविजृम्भितैस्त्रिनयनप्रेमानुरोधेन वा

सार्द्धं नैव मया मिलन्ति समरश्रद्धालवो दानवाः ।

तन्मे भूरिदिनानि सङ्गरमहादुर्भिक्षदूनात्मनः

सम्प्रत्येष रणोत्सवः प्रभविता हर्षाय शम्भोः पुरः ॥ २५ ॥

नारदः—( सहर्षम् ) अहह ! दिष्ट्या कृतकृत्योऽस्मि संवृत्तस्तदिदानीं नेतरस्य कस्याप्यपेक्षा ।

नैर्ऋत्यः—( सक्रोधं स्वगतम् ) कथं सामान्यगणनयापि न मां गणयत्ययं बटुः तदेवं तावत्–( प्रकाशम् )

देवद्रोहिविपाटनव्यतिकरे वीरोऽहमेकः परं

तादृक्षो त्वदनादरेण गरिमा किं नारद ! क्षीयते ।

आस्ते कौतुकमात्रमेव कलहक्रीडासु ते चापलं

भीरुः शूर इति स्थितिं कथमहो जानाति विप्रो भवान् ॥ २६ ॥

नारदः—( स्वगतं सहर्षम् ) दिष्ट्या असावप्यस्मत्पक्ष एव तावत्संवृत्तः । क्रुध्यतु क्रुध्यतु । सुतरां प्रियं प्रियं मे । ( प्रकाशं सप्रश्रयम् )

धुरीणो वीराणां रजनिचर ! कोऽन्योऽस्ति भवतः

प्रधानं शस्त्राणां तव परमसिः क्रीडति करे ।

त्वमभ्यर्थ्यो योद्धुं किमिव दिविषत्कार्यपरवा-

न्विधिः केनादिष्टो घटयति मुहुर्विष्टपमिदम् ॥ २७ ॥

नन्दी—( सस्पृहम् ) अयि सुराचार्य ! सुष्ठु मामेवंविधदानवविशेष-शुश्रूषा मुखरीकरोति । तथाहि—

अस्तोदयस्थितिरियं किमु लङ्घनीया
केनापि किन्तु पुरुषप्रवरः स एकः।
यत्कानरा बहुतराः सहसा समेत्य
तद्देशसव्यतिकरं मुहुरारभन्ते ॥ २८ ॥

तत्कथय कोऽयं वीरशिरोमणिः ?।

बृहस्पतिः—अयि शिलादसूनो ! कथितः किमेष विज्ञेयः अन्तरिक्ष-चरस्त्रिपुराभिधानो धूमकेतुरिव त्रैलोक्यस्य ?।

दुष्प्रेक्षाः प्रसरत्प्रभूतहुतभुग्ज्वालौघनीराजित-
व्योमानो मुखरस्फुलिङ्गपटलप्रच्छादिताशामुखाः।
गङ्गाम्भःकवचे शिवस्य शिरसि प्रेङ्खन्ति तन्मार्गणा-
स्थाङ्कारान्न पुनः शृणोति दिविषद्दैवतस्तत्कृतान् ॥ २९ ॥

न चायमन्तरिक्षचरोऽन्तरिक्षमेव क्षिणोति। क्षितिरपि सुतरामनेनैवोत्साप्यते। सोऽपि रसातलनायको भुजङ्गराजो भग्न एवानेन।

( ततः प्रविशति पृथिवी )

पृथिवी—( सोद्वेगमाकाशे लक्ष्यं बध्वा ) भअवं कमलुब्भव ! किं तुमं उआलंभेमि ?। अहो दे दुव्विलसिदं !

साधारणा अट्ठ कुलाअला णं
ते दिग्गआ सो अ भुअंगराओ।
मं धारिऊणं इअ वित्थरेण
भंजेसि किं दारुणदाणवेहिं ॥ ३० ॥

ता ण तुमं उवसप्पिस्सं। तं य्येव चंदसेहरं सरणं गमिस्सं, जो तुमं पि णिम्मेदि। ( परिक्रामन्ती स्खलनमभिनीय सवैक्लव्यम् ) अहह ! सुट्ठु अबलम्हि संजादा। ता को मह आलंबणं। दूरे सो भुअंगराओ।

---

१ भगवन् कमलोद्भव ! किं त्वामुपालभे ?। अहो ! ते दुर्विलसितम्।

साधारणा अष्ट कुलाचला ननु
ते दिग्गजाः स च भुजङ्गराजः।
मां धृत्वा इति विस्तरेण
भञ्जयसि किं दारुणदानवैः ॥

तन्न त्वामुपसर्पिष्ये। तमेव चन्द्रशेखरं शरणं गमिष्यामि यस्त्वामपि निर्माति। अहह ! सुष्टु अबलास्मि सञ्जाता। तत्को ममालम्बनम्। दूरे स भुजङ्गराजः।

( प्रविश्य पुरुषवेषः शेषः )

शेषः—भगवति भूतधात्रि ! मामवलम्बस्व ।

पृथ्वी—( विलोक्य ) कधं णायराओ संपत्तो ! । अइ णाअराअ ! लज्जामि वज्जमइआ इधवि तुमं अवलंबंती । किं विसुमरिदं मे दुव्विसहदाणवसरासारघुम्मन्ति मं उव्वहन्तस्स तुह दुव्वहदुप्फडणिम्मोअपट्टं फणाचक्कं[1] ।

शेषः—भगवति ! भाग्यवानस्मि यदेवं सर्वाधारभूता धरादेवी सम्भावयति । तदवलम्बस्व । निकट एवायं भगवान्भवानीपतिः पुरन्दरप्रमुखदिविषत्परिषदुपास्यमान आस्ते । तदेह्युपसर्पावः ।

( उभावुपसर्पतः )

पृथ्वी—भअवं भग्ग सअललोअसग्गसंहारपरित्ताणकारण ! णमो दे णमो दे[2] ।

शेषः—( सप्रश्रयम् ) अष्टतनुसंविभागाभ्युपगतनिखिलभुवनकार्यवृषध्वज ! नमस्ते नमस्ते ।

महेशः—( ससम्भ्रमम् ) आः किमेतत् ! ।

बाष्पाकुलास्या विकलं चलन्ती
विशालनिःश्वासविलोलवेणिः ।
उपस्थिता मूर्त्तिमती त्वमाधि-
रस्मन्मनो मेदिनि ! सादयन्ती ॥ ३१ ॥

तत्कथय किमेतत् ?। भगवति महि ! सकललोकमहनीये महदेतदत्याहितम् ।

कादम्बिनी काचिदपूर्वरूपा
त्वमुर्वरे ! भूरिरसोपगूढा ।
उर्ध्वस्थलोकानपि हव्यकव्य-
प्रवर्षणैः प्रीणयसे तलस्था ॥ ३२ ॥

पृथ्वी—( सप्रश्रयम् ) भगवन् ! केयमात्मविकत्थनता । ननु त्वन्मूर्तिरहमस्मि ।

---

१ कथं नागराजः सम्प्राप्तः ! । अयि नागराज ! लज्जे वज्रमयी अत्र त्वामलम्बमाना । किं विस्मृतं मया दुर्विषहदानवशरासारघूर्णमानां मामुद्वहतस्तव दुर्वहदुष्फटनिर्मोकपट्टफणाचक्रम् ।

२ भगवन् भर्ग सकललोकसर्गसंहारपरित्राणकारण ! नमस्ते ।

महेशः—( शेषमालोक्य )

चलाचलधरोत्कृत्तफणाव्रणगणातुरः ।
अदशन्नपि नागेन्द्र ! त्वं नो दशसि मानसम् ॥ ३३ ॥

शेषः—( ससंरम्भम् ) अयि देवदेव ! त्वदादेशवशंवदोऽस्मि न पुनरहमपर्याप्तः ।

सहस्रेणास्यानां प्रसरदुरुनिःश्वासमरुता
पृथुज्वालाजालं किमु वियति वर्षामि न विषम् ।
यदीयक्षेपेन त्रिपुरदनुजोन्मूलनविधौ
न मन्त्रस्तन्त्रो वा प्रभवति समाधानकरणे ॥ ३४ ॥

नारदः—( सहर्षाश्चर्यम् ) साधु साधु न खलु क्षमाभारोद्वहने एव समरभारोद्वहनेऽपि धुरीण एव भुजङ्गराजः । ( शिशिरबाधामभिनीय ) आः ! किं पुनरेवंविधदुःखोष्मसंबाधेऽपि शिशिरवैधुर्यमुज्जृम्भते । ( पुरोऽवलोक्य ) कथमयं पर्वतराजः प्राप्तः ! । ( सहर्षम् ) एह्येहि शैलराज ! हरश्वशुर ! शिशिरय त्रिपुरपरिभवोत्तप्तं सुरसमूहम् ।

( प्रविश्य )

हिमवान्—( सपश्चात्तापं हस्तं विधुन्वन् ) अयि मुनीन्द्र !

अहह ! किमिह कुर्मो नायकस्यामराणां
कुलिशदलितपक्षाः पङ्गवो यत्कृताः स्मः ।
असमचयभराढ्याः स्वैरमुड्डीयमानाः
किमु न दनुजसार्थं खेचरं चूर्णयामः ॥ ३५ ॥

तदिदानीं स्थावरोऽपि कामरूपो विरूपाक्षापेक्षां पूरयिष्ये ।

नारदः—( सप्रश्रयम् ) अयि दुर्लक्ष्य त्र्यक्ष ! क इदानीं प्रतीक्ष्यते । त्रिपुरोपरुद्धे देवयाने सूर्याचन्द्रमसौ परमिह नागतौ ।

नन्दी—( दिशोऽवलोक्य ससम्भ्रमम् ) आः ! किमेतत् ।

रात्रिर्गतैव विहरन्ति न वारिवाहा-
स्तारुण्य एव तरणिः परिणाममेति ।
आः ! कोऽयमद्भुतमयः समयस्तनोति
दिक्चक्रमक्रममिलत्तिमिरप्ररोहम् ॥ ३६ ॥

( सर्वे सचमत्कारमालोकयन्ते )

( नेपथ्ये )

दैत्यान्तकारिहरिचक्रपराक्रमस्य
यो हीनतां पिशुनयत्यविनष्टमौलिः ।
सोत्कर्षरोषभरभीषणनिःपिधान-
दंष्ट्रः स एष विनिहन्ति विधुन्तुदोऽर्कम् ॥ ३७ ॥

तत्परित्रायतां यः कश्चिदिह शूरतरः सुरोऽस्ति ।

महेशः—(ससंरम्भम्) नन्दिन्नुपनय मे चापम् । द्रागस्तु निःशोकः सूर्यलोकः।

नन्दी—आः! कोऽयमसद्ग्रहो विगतविग्रहं निगृहीतं राहुग्रहं ग्रहीतुम् । त्रिपुरदाह एवारभ्यताम् , येनोपरूढदेवयानपितृयानेन धर्मपथनिर्मूलमुन्मूल्यते ।

( नेपथ्ये )

( सक्रोधम् ) आः ! क एष धर्ममुन्मूलयति ? ।

धर्मः सदैव बलवान्विजयैकहेतुः
धर्मोऽभिरक्षति परं स्मरणप्रयत्नात् ।
ते जम्भकैटभगजान्धकतारकाद्या
धर्मद्रुहः कथय केऽभ्युदयं प्रपेदुः ॥ ३८ ॥

नारदः—( सहर्षम् ) कथमागत एव मम ज्येष्ठो भ्राता ब्रह्मनन्दनो धर्मः ! ।

धर्मः—( प्रविश्य ) भगवन्नशेष जगदाधार ! एष त्वां धर्मः प्रणमति ।

महेशः—अयि धर्म ! किमेवमुच्यते ? । अस्माकमपि वृषभरूपधारस्त्वमाधारः । इहोपसीदतु भवान् ।

धर्मः—महेश ! त्रिपुरोपरुद्धे जगति इहैव मे स्थानम् । ( इत्युपविशति )

नारदः—( सहसोपसृत्य सप्रश्रयम् ) भगवन् धर्म ! एष त्वां कनिष्ठो नारदोऽभिवादयते । ( इति प्रणमति )

धर्मः—( सहर्षम् ) वत्स कलिप्रिय !

सुधान्धसां पक्षपरिग्रहेण
विनिग्रहेणोन्मददानवानाम् ।
निष्पादयिष्यामि कलिं कठोरं
त्वत्प्रीतये चात्मविवृद्धये च ॥ ३९ ॥

नारदः—( सहर्षम् ) भगवन् ! त्वयि सपक्षे देवानां भविष्यति भगवान्नारायणः सेनानीरतः को विजयसंशयः ।

यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ।

कार्त्तिकेयः—( सक्रोधं स्वगतम् ) कथं मां सेनान्यं निरस्य नारायणः सुराणां सेनानीर्भविष्यति ? । ( प्रकाशं ससंरम्भम् ) अयि नारद !

हित्वा पौरुषवासनां न महिलाभावं गमिष्याम्यहं
याञ्चोत्सारितगौरवो नहि मुने ! ह्रस्वो भविष्यामि वा ।
कूर्मक्रोडझषादिरूपविगतिर्नैवानुभाव्या मया
सेनानीः पुरुषोत्तमो दिविषदां योग्यो न मादृग्जनः ॥ ४० ॥

नारदः—( सहर्षम् ) दिष्ट्या वर्द्धते दिविषद्वर्गः । यदयं संरब्धः शम्भुनन्दनः । ( सहसोपसृत्य कार्त्तिकेयं शिरस्याघ्राय )

अबालविक्रमो बालः शूलिनो मोदतामयम् ।
अस्य प्रसादतो देवा निर्जरा यान्तु वृद्धताम् ॥ ४१ ॥

महेशः—अयि कार्त्तिकेय ! किमनभिज्ञः प्रलपसि ? । मद्बन्धुर्मधुकैटभारिः पितृव्यस्ते भवति ।

कार्त्तिकेयः—( सप्रश्रयम् ) यदि पितृव्यस्तत्किं मयि स्थिते पिता पितृव्यः पितामहो वा रणायासमनुभविष्यति ? ।

महेशः—( सस्मितम् ) अयि नारद ! गच्छ । समानय पितामहकृष्णौ । मा कल्पान्तं तद्वरप्रदानगर्वितास्त्रिपुरासुरा भविष्यन्ति । तत्तदनुमतेनैव तान्निर्दहामि ।

नारदः—यथाऽऽदिशति देवः । ( इति निष्क्रामति )

महेशः—अयि महेन्द्रादयो देवाः ! सर्वे सज्जीभवत निजनिजदिङ्मुखेषु । एष निष्पन्न एव त्रिपुरदाहः । रक्षणीयः परमिह मायाप्रपञ्चो दुर्लक्षो दानवानाम् ।

इन्द्राद्याः—( सप्रश्रयं सहर्षम् ) यथाऽऽज्ञापयति देवः ।

( इति सर्वे निष्क्रान्ताः )

प्रथमोऽङ्कः

## द्वितीयोऽङ्कः

( ततः प्रविशत्यलीकः )

अलीकः—( पुरोऽवलोक्य ) कधं एसो मह पिअवअस्सो विवरीदो गच्छदि ! । अच्छरिअं अच्छरिअं जइ एसो अन्धो ता कधं तुरिदपदं परिक्कामदि । जदि ण अन्धो ता कधं ण मं पेक्खदि । भोदु सद्दावेमि । अयि विवरीद विवरीद ! कहिं पत्थिदोसि ? ।[1]

विपरीतः—( सहसाऽवलोक्य सहर्षम् ) पिअवअस्स अलिअ ! दिट्ठिआ तए वाहरिदोम्हि । अण्णहा तुमं अपेच्छिअ गदो तुमं अन्नेसअन्तो ग्विज्जन्तोम्हि[2] ।

अलीकः—किं उण तुमं मं ण पेक्खसि[3] ? ।

विप०—वअस्स ! गरुअरज्जकज्जभारुव्वहणवावडहिअएण [illegible] मए तुमं पेक्खिदोसि[4] ।

अलीकः—( साशङ्कम् ) वअस्स ! केरिसं रज्जकज्जं[5] ? ।

विप०—तिउरणाहपरिभूदेहिं देवेहिं मिलिअ मंतिऊण हरिविरिंचिपासं पेसिदो णारदोत्ति चरेहिं दाणवणाहस्स विन्नत्तं[6] ।

अलीकः—( सावज्ञम् )

दिग्गअद्दमणत्थं ससआणं एस मेलओ, जं तिउरणाहणिम्महणत्थं अमराणं मेलओ[7] ।

---

१ कथमेष मम प्रियवयस्यो विपरीतो गच्छति ! । आश्चर्यमाश्चर्यं यदि एषोऽन्धस्तत्कथं त्वरितपदं परिक्रामति । यदि नान्धस्तत्कथं न मां प्रेक्षते । भवतु शब्दापयामि । अयि ! विपरीत विपरीत ! कुत्र प्रस्थितोऽसि ? ।

२ प्रियवयस्य अलीक ! दिष्ट्या त्वया व्याहृतोऽस्मि । अन्यथा त्वामप्रेक्ष्य गतस्त्वामन्विष्यन् खिद्यन्नस्मि ।

३ किं पुनस्त्वं मां न प्रेक्षसे ? ।

४ वयस्य ! गुरुराज्यकार्यभारोद्वहनव्यापृतहृदयेन न मया त्वं प्रेक्षितोऽसि ।

५ वयस्य ! कीदृशं राज्यकार्यम् ? ।

६ त्रिपुरनाथपरिभूतैः देवैः मिलित्वा मन्त्रयित्वा हरिविरिञ्चिपार्श्वे प्रेषितो नारद इति चरैः दानवनाथस्य विज्ञप्तम् ।

७ दिग्गजदृपणार्थं शशकानामेष मेलकः, यत्त्रिपुरनाथनिर्मथनार्थममराणानां मेलकः ।

विप०—( सक्रोधम् ) अयि अलिअ ! शैशवादो पहुदि राअउलपवड्ढिदो क्खु तुमं णअमअणिउणो कहं एवं मन्तेसि । णं परमाणुमेत्ते वि वेरिए अप्पमत्तेण भोदव्वं[1] ।

अलीकः—ता कधेसु किं संदिट्ठं तिउरणाहेण[2] ।

( विपरीतः कर्णे एवमेव )

अलीकः—( सहर्षम् ) साधु साधु सुमंतिदं एदं[3] ।

विप०—( सगर्वम् ) वअस्स ! एदस्सिं कम्मे तए मए वि भणिदव्वं विपरीदो असुराणं विजओ, अलिओ देवाणं क्खओ । ता गच्छ तुमं विप्पआरसु विरिञ्चं । नारओ विन्हुसआसे चिट्ठदि । अहंपि हरं विप्पआरिअ पुरंदरपहुदिदेवे विप्पआरेमि[4] ( इति निष्क्रान्तौ )

( विष्कम्भकः )

( ततः प्रविशति नारायणो नारदश्च )

नारायणः—( साशङ्कम् ) किं पुनरद्य नारदः शारदाम्बुद इव नीरसो विच्छायकायः स्थितः ? । इयमपि वीणा स्कन्धावलम्बिनी भारायते ।

नारदः—( सखेदं निःश्वस्य ) अयि वैकुण्ठ !

करुणरुदितनादव्यक्तिमामन्त्रयन्ती
प्रकटमभिदधाना मूर्च्छनां निर्जराणाम् ।
तनुरियमसुरारे ! वादिता दुःखवीणा
नहि मम सुखयेत्त्वां तेन मूकः स्थितोऽस्मि ॥ १ ॥

नारायणः—(ससम्भ्रमम) अत्याहितमत्याहितम् ! । अयि नारद ! सकलभुवनवृत्तान्तविशारदोऽसि । तदावेदय कस्यायं सुचिरमस्ताय क्षणिकोऽभ्युदयः ।

---

१ अयि अलीक ! शैशवात्प्रभृति राजकुलप्रवर्धितः खलु त्वं नयज्ञाननिपुणः कथमेवं मन्त्रयसि ? । ननु परमाणुमात्रेपि वैरिणि अप्रमत्तेण भवितव्यम् ।

२ तत्कथय किं सन्दिष्टं त्रिपुरनाथेन ।

३ साधु साधु सुमन्त्रितमेतत् ।

४ वयस्य ! एतस्मिन् कर्म्मणि त्वया मयाऽपि भणितव्यं विपरीतोऽसुराणां विजयः, अलीको देवानां क्षयः । तद्गच्छ त्वं विप्रतारय विरञ्चिम् । नारदो विष्णुसकाशे तिष्ठति । अहमपि हरं विप्रतार्य पुरन्दरप्रभृतिदेवानपि विप्रतारयामि ।

नारदः—अहो ! शुभदशा दानवानां यद्विश्वव्यापिना त्वया तदर्थमन्यः पर्यनुयुज्यते । तदहं किं न विज्ञपयामि ? ।

भुवनत्रयमिदमखिलं त्रिपुरप्रभुपरिभवानलज्वलितम् ।
क्षणमपि न समं लभते त्रिभुवनभर्तुः पुरो भवतः ॥ २ ॥

अपिच—

आकाशे नावकाशः क्षणमपि भवति स्वर्वधूनां विहर्त्तुं
योगे वा संयुगे वा विघटिततनवो नार्कसम्पर्कभाजः ।
संरुद्धे देवयाने प्रसरदुरुमदत्रैपुरानीकचक्रै-
रप्यग्निष्टोमयाजी प्रभवति न पुरीं पौरुहूतीमुपैतुम् ॥ ३ ॥

नारायणः—अयि नारद ! भवानप्येवमाह । किन्न पश्यसि भवान् उग्रतपोभिरुग्रमाराध्य दानवा उग्रा भवन्ति । किमहं परवान् करवै ? ।

गदा सदा दानवदारयित्री
सौदर्शनं दर्शनमेव घोरम् ।
न मन्दशक्तिर्मम नन्दकोऽयं
निदेशमैशमहं समीहे ॥ ४ ॥

नारदः—( सोपहासम ) अहो ! प्रभावोऽसुरसुकृतानां, यैः सर्वज्ञा अप्यज्ञतां प्रापिताः । शम्भुरेवं जानीते, जनार्दनदत्तवरास्त्रिपुरासुराः । न च भवान् हरवराशङ्की प्रतिकूलेष्वपि तेषु प्रातिकूल्यमवलम्बते । एवमाह मां भगवान्भर्गः । द्वितीयः किल ममात्मा मुरारिरर्द्धाङ्गहरस्तत्कदाचित्तद्दत्तवरमसुरं प्रहरते ' मह्यं स कुप्येत्, तत्त्वं गत्वा निरूपय ' ।

नारायणः—( सप्रश्रयम् ) अयि नारद !

देहार्द्धसम्बन्धवरप्रदानैः
स्वयं स मां लालयतु प्रसन्नः ।
सङ्ग्रामसेवावसरेषु शम्भो-
र्मदग्रतः स्यादधिको न नन्दी ॥ ५ ॥

( ततः प्रविशति नन्दी )

नन्दी—अहो ! देवानामभाग्यसम्पत् , यद्देवानामियमितरेतरकलहवल्ली पल्लविता । ( समन्तादवलोक्य ) कथं प्राप्त एवास्मि विष्णुलोकम् ! । तदिह क्व नारायणः ? । ( पुरोऽवलोक्य ) कथमयं नारायणो नारदेन सह विश्रब्धं मन्त्रयमाणोऽस्ति ।

( साश्चर्यम् ) आः ! किमेतदयं हि रुदितोच्छूननयनः कैटभारिपरिभवं भवाग्र- तोऽभिधाय सोद्वेगमपक्रान्तः । तत्कथमत्रा..............ऽवलोक्यते ? । अथवा दुरधिगमगतिर्नारदस्य । भवन्तमुपसर्पामि । ( उपसृत्य ) अयि पुरुषोत्तम ! तथा महेशमुपहस्य किमेवं स्थीयते ? । अपि च—

त्वयार्चितो यो नयनाम्बुजेन
चकार यः सर्वजगत्प्रभुं त्वाम् ।
गौरीव येनार्द्धतनौ धृतस्त्वं
स्थाणुः स शौरे ! हसनीय एव ॥ ३ ॥

नारदः—( सक्रोधम् ) आः मृषावादिन् ! किमेवमतिनिन्दितमकस्माद्व्याहरसि ? ।

नन्दी—( सक्रोधम् ) अयि नारद ! सत्यं कलहप्रियोऽसि । किन्त्वेवं हरिहरयोः कलहकारिणा न त्वया भवितव्यम् । भवतैवेति भवोऽभिहितः । कैटभारिः किल मां साधिक्षेपमित्थमाह । ' किमहं स्थाणोस्तस्य निदेशकारः । स्वैरमहं दानवानुन्नमयामि नमयामि वा ' ।

नारदः—(साश्चर्यंससम्भ्रमम्) आः ! कदाहं क्वाव्यावृत्य जगदीशसकाशं गतः ? ।

नारायणः—( ध्यानं नाटयित्वा सस्मितम् ) अयि शिलादसूनो ! अयि नारद ! आस्तामास्तां वाक्कलहः । केनापि मायाविना दानवेन नारदरूपचतुरेण हरो विप्रलब्धः । तदचिरेण भगवन्तं चन्द्रचूडं सम्भावयतु नन्दी, यावन्न किमप्यत्याहितमापतति । अहमपि भगवन्तं विरिञ्चिमादायागतोऽस्मि ।

नन्दी—( सव्रीडम् ) यथाऽऽदिशति हृषीकेशः । ( इति निष्क्रान्तः )

नारा०—गच्छ नारद ! समानय भगवन्तं कमलासनम् ।

( ततः प्रविशति कपटनारदेनानुगम्यमानो विरिञ्चिः )

विरिञ्चिः—( सक्रोधम् ) तात नारद ! स त्वं मम पुत्रो नारद एव न भवसि यदेवंविधं परिभवं चक्रिणः सोढवानसि ? ।

कपटनारदः—( स्वगतं साशङ्कम् ) किं मुणिदोम्हि ?[1] । आदु कुविदो एस एवं वाहरदि । तह वि एयं दावे । ( प्रकाशम् ) अयि तात ! भगवति भर्गे गोविन्दे च त्वयीवाहं विनयेन वर्त्ते ।

---

१ किं ज्ञातोऽस्मि ? । अथवा कुपित एष एवं व्याहरति । तथापि एतत् तावत् ।

विरिञ्चिः—साधु साधु। (सर्वतो विभाव्य) अये। समागत एवास्मि विष्णुलोकम्। तत्कथं करोमि!। (स्वगतम्) युद्धदुर्मदो मुरारिर्वरं शापोदकेनैव तं शमयामि। (प्रकाशम्) अयि नारद! न सहे समरविस्तरेण कालक्षेपं, तदहं शापेनैव केशवं शवीकरोमि।

कपटनारदः—(तूष्णीं तिष्ठन्स्वगतं सहर्षम्) दिट्ठिआ कअकज्जो भविस्सं[1]।

विरिञ्चिः—(सक्रोधमुच्चैः)

सोऽन्यः सिन्धुपतिर्युगान्तविलसद्वेलासमुल्लङ्घने
यस्मिन्कृष्ण! भवान्वटद्रुमशिखाशाखाश्रयेणोद्धृतः।
शापाम्भोजलधिः प्रकोपवडवावैश्वानरोत्सङ्गितो
ब्राह्मः कोऽप्ययमद्भुतोऽभ्युदयते यस्ते निवापाञ्जलिः॥ ७॥

कृष्णः—(श्रुत्वा सभयम्) आः! किमेतत् किमेतत्। (इत्युत्तिष्ठति)

नारदः—(ससम्भ्रमं वेगादुपेत्य) तात! धिक्त्वां धिक्त्वाम्। किमनुचिते प्रवर्त्तसे?। एष त्वां हरिरभ्युद्गच्छति।

(कपटनारदस्तिरोधत्ते)

विरिञ्चिः—(नारदं दृष्ट्वा) कथमयं नारदः?। (पार्श्वमवलोक्य कपटनारदमदृष्ट्वा साश्चर्यमधोमुखस्तिष्ठति)।

नारायणः—(सस्मितं सप्रश्रयम्) आर्यपितामह! मुञ्च मुञ्च वैलक्ष्यम्। त्र्यक्षोऽपि देवस्त्वमिव केनापि दानवेन नारदरूपधारिणा हरिस्त्वामुपहसतीति साटोपकोपः कृतो मदधिक्षेपाय प्रजिघायात्र शिलादसूनुम्।

(ततः प्रविशति नन्दिनानुगम्यमानो महेशः)

महेशः—(सानुतापम्)

अविमृश्यकारितेयं क्रूरा कालोरगी हहा! कापि।
यद्दष्टमनिशमन्तः सशल्यमिव तप्यते हृदयम्॥ ८॥

अयि नन्दिन्! कथय कथय त्वदुदीरितदुरुदाहरणकन्दलितकोपः कथं बभूव, किमाह कृष्णः।

नन्दी—(सप्रश्रयम्) अयि चतुर्दशजगन्नायक! किमेवमनुतप्यते सर्व-

---

१ दिष्ट्या कृतकार्यो भविष्यामि।

ज्ञः । कृष्णो निश्चित्य दुर्दैत्यदुर्विलसितो देवदेवसम्बोधनाय प्रागेव मां कृतनिश्चितः प्रजिघाय ।

महेशः—( सौत्सुक्यम् ) अयि नन्दिन् ! कदा मे कृष्णमेघसंद मनोमयूरः परिमुक्तपरितापो भविष्यति ।

नन्दी—( सस्मितम् ) विमना देवो न जानीते । ननु वयमागता एव विष्णुलोकम् । किन्न पश्यति देवः पुरतोऽभ्युत्थितौ विरिञ्चिनारायणौ सनारदौ ? ।

महेशः—( सहर्षं सोत्कण्ठमुपसृत्य सपरिहासम् ) कृष्ण ! कृष्ण आवयोः समरद्रष्टा स्रष्टाप्ययमुपेत एव । तदेहि युध्यते । ( इति समालिङ्गति )

कृष्णः—( सप्रश्रयम् ) अयि देवदेव ! किन्तु प्रश्रयेण मम भक्तिं नरयसि । ( इति प्रणमति )

महेशः—भगवन्पितामह ! एष त्वां महेशोऽभिवादयते ।

( पितामहः सलज्जं तूष्णीमास्ते )

नारदः—अलङ्क्रियन्तामासनानीमानि भवद्भिः ।

महेशः—उपविशतु पुरो भगवान् विरिञ्चिः ।

विरिञ्चिः—( सनिःश्वासं सप्रश्रयम् ) अयि देवदेव ! दानवाधमविप्रलब्धो नाहमेवंविधमादरमर्हामि ।

महेशः—अयि पितामह! समान एवायमावयोरपकर्षस्तदुपविश्यताम्।

( सर्वे यथायथमुपविशन्ति )

महेशः—( सस्मितम् ) अयि पितामह ! कथं पुनर्भवान्दानवाधमेन विप्रलब्धः ।

विरिञ्चिः—( सवैलक्ष्यम् ) अयि जगन्नाथ ! किं कथयामि । केनापि बाष्पाम्बुपूरकारिणा नारदरूपधारिणा साक्रन्दमुक्तोऽस्मि । अधिक्षिप्तोऽस्मि केशवेनाहं त्वत्पितुर्वरदानेन दृप्तास्त्रिपुरासुराः परिभवन्ति भुवनत्रयम् । तत्तेनैव सह तानुन्मूलयामि । ततोऽहं क्रुद्धो विष्णुलोकं समागतवान् । ( निःश्वस्य ) किमप्यनुचितमारब्धवान् । रक्षितोऽस्मि सर्वज्ञेन क्षमिणां वरेण दामोदरेण ।

महेशः—( सस्मितम् ) अहमप्यपरनारदेन गत्वा बोधितोऽस्मि 'किन्तेन मे स्थाणुनेति त्वां हरिरुपहसति'। ततोऽहं केशवान्तिकमागतेन नन्दिना गत्वा सम्बोधितोऽस्मि । शमितक्रोधोऽत्र समायातोऽस्मि ।

कृष्णः—( सपरिहासम् ) अहो ! कलिप्रियस्य कलहावलोकनकारणेन कायव्यूहकारिता ।

नारदः—( सक्रोधमिव आकाशे लक्ष्यं बद्ध्वा ) साधु दानवाः ! साधु । पुनः पुनर्विडम्बयत तातं कमलासनम् । दास्यति वरान्युष्मभ्यम् ।

विरिञ्चिः—अयि नारद ! किमविज्ञाय कुप्यसि ? ।

तपः संसेवन्ते दुरधिगमकामार्थमसुरा-
स्ततः प्रीतात्मानो ददति च वरं युक्तममराः ।
त्रिलोकीसंहारप्रणिहितधियः पापनिधयो
न बध्यन्ते दैत्या गदितुमिति कस्यास्ति रसना ॥ ९ ॥

सोपधिश्च वरो मत्तस्तैर्गृहीतो यथा किल त्रयोऽपि वयमेकशरविद्धा एव वध्याः ।

नारदः—अत एव ते योजनशतान्तरेण सञ्चरन्ते । तदित्थमवध्या एव ते संवृत्ताः । कैवंविधं धनुः, कैवंविधः शरः, कैवंविधो धन्वी, येनैकशरेण त्रयोऽपि विध्यन्ते ।

कृष्णः—( सक्रोधम् ) अयि नारद ! मैवम्—

स कोदण्डश्चण्डः कठिनकठिनः किन्न भविता
पृषत्कः सायामः किमु न भविता योजनशतम् ।
अविज्ञेयो धन्वी किमु न भविता कोऽपि विषमो
विधौ क्रुद्धे मृत्युः किमु न निकटः सोऽपि भविता ॥ १० ॥

नारदः—( सहर्षम् ) अयि कृष्ण ! त्वयि क्रुद्धे क्रुद्धो विधिः, क्रुद्धः परमेश्वरः ।

नन्दी—( सहर्षं साश्चर्यमूर्ध्वमवलोकयन् ) अहो ! कृष्णवचनमनुवर्तन्ते दुष्टदानवविनाशपिशुनानि दुर्निमित्तानि । पश्यत पश्यत—

पुच्छेऽग्रे च विशालभीमशिरसः सायामकायक्रमाः
पौरस्फोटितभाण्डनादजनितद्वैगुण्यशब्दोर्मयः ।
बद्धोत्फालपृथुस्फुलिङ्गपटलैराग्नेयदिग्विभ्रमं
बिभ्राणाः सकलासु दिक्षु निपतन्त्युल्काः पुरे खेचरे ॥ ११ ॥

**नारदः**—( तदनुसारेणोर्द्ध्वमवलोक्य सहर्षम् ) सत्यं सत्यम् ।

व्योम्नि प्रकटयन्त्येता उल्काः दीप्तशिखाः पुरीम् ।
दीपिका इव कालस्य दुष्टदैत्यान्विचिन्वतः ॥ १२ ॥

( नेपथ्ये )

अयि चंचला दाणवा ! चिट्ठध चिट्ठध। को एस तुम्हाणं अलिओप्पादभअसंखोहो । णूणं एदाओ पलाअन्तस्स पावअस्स करालाओ जालाओ णिवडिदाओ । मए खु णारअवेसेण महेसं वंचिअ वंचिदा महेन्दपमुहा लोअवाला । परिदेविदं खु ताणं पुरदो मए । 'हा ताद कमलासण ! हा महेस ! हा केशव ! कह तुम्हेहिं तिउरासुरणिव्वासिदेहिं पाआलमूले वसिदव्वं । तुम्हेवि महेन्दपमुहा सव्वे सुरा तहिं गच्छध गच्छध कुणह परोप्परमुहावलोएण तहिं कालक्खेवं । तदो महेंदपमुहेहिं अमरेहिं अविआरिअ झत्ति य वक्कंतं । ता सइं झत्ति संभावेदु देओ सुज्जताओ अ जहिच्छं सुरिंदरायहाणिं[1] ।

( पुनर्नेपथ्ये )

साधु विपरीत ! साधु । शिरोमणिस्त्वमसि मद्भृत्यानाम् । सफलीकृतं भवता विपरीतेति नाम, यदसुराः स्वर्गसदः कृताः, पातालमूलं प्रापिता अमराः ।

**नारदः**—( सावेगं सभयं च ) अयि श्रुतं भवद्भिः ? ।

**नन्दी**—किं श्रोतव्यम् ? ।

---

१ अयि चञ्चला दानवाः ! तिष्ठत तिष्ठत । क एष युस्माकं अलीकोत्पातभयसङ्क्षोभः । नूनमेताः पलायमानस्य पावकस्य कराला जाला निपतिताः । मया खलु नारदवेषेण महेशं वञ्चयित्वा वञ्चिता महेन्द्रप्रमुखा लोकपालाः । परिदेवितं खलु तेषां पुरतो मया हा तात कमलासन ! हा महेश ! हा केशव ! कथं युस्माभिः त्रिपुरासुरनिर्वासितैः पातालमूले वसितव्यम् । यूयमपि महेन्द्रप्रमुखाः सर्वे सुराः तत्र गच्छत गच्छत, कुरुत परस्परमुखावलोकेन तत्र कालक्षेपम् । ततो महेन्द्रप्रमुखैरमैररविचार्य झटित्येव अपक्रान्तम् । तत्सम्प्रति झटिति सम्भावयतु देवो यथेच्छं सुरेन्द्रराजधानीम् ।

**नारदः**—पश्यत पश्यत । विपरीतवचनसमाकर्णनानन्तरमेव

हर्षोत्कर्षविशृङ्खलासुरचमूसान्द्रध्वजश्रेणिभिः
कुर्वन्नम्बरडम्बरं हयमहाहेषोर्मिवाचालितम् ।
तन्वन्दिग्वलयं नवाम्बुदमयं दानान्धदन्तावलै-
रेष प्रस्थित एव दानवपतिः पौरन्दरं पत्तनम् ॥ १३ ॥

( सखेदं निःश्वस्य )

कोदण्डेऽजगवे कदा गुणलता टङ्कारमापत्स्यते ?
मोच्या हन्त कदा गदाऽथ भविता ब्राह्मं तदस्त्रं कदा ? ।
याता एव यतस्ततो दिविषदस्ते ते महेन्द्रादयो
धिग्धिग्वश्चिरजीवितं यदसुरैः स्वर्गो हहा ! गृह्यते ॥ १४ ॥

**कृष्णः**—(सोत्साहम्) अयि नारद! किमेवमाकुलोऽसि?। स्वर्गनामसमाकर्णनेपि बधिरा एव दानवाः । ( इति चिन्तां नाटयति )

**नन्दी**—( ऊर्ध्वमवलोकयन् साश्चर्यं स्वगतम् ) आः ! कोऽयमाकस्मिको महान्धकारः सहसा विजृम्भते । नूनमियं कृष्णप्रयुक्तेन्द्रजालमाया भविष्यति, यद्दैत्यवरूथिनीमेवोपसर्पति । ( प्रकाशम् ) आश्चर्यमाश्चर्यम् !

अन्योन्यं घटनादुपात्तकलहाः क्षुभ्यन्त्यहो कुम्भिनो
जायन्ते स्वयमेव दन्तिदशनाघातस्य लक्ष्यं हयाः ।
दूरे शक्रपुरी निजालयपरावर्त्तोऽप्यभूद्दुर्लभः
सद्यः पश्यत पश्यतासुरबले ध्वान्तैः कृतान्तायितम् ॥ १५ ॥

**नारदः**—( सहर्षम ) अयि दानवारे ! नमस्ते नमस्ते । नामापि न भविष्यति त्वयि क्रुद्धे दानवानाम् ।

नैतस्य द्विरदा मदाकुलकटा नोदग्रवेगा हया
योद्धारो न निशातशस्त्रनिधयो नोग्रप्रमाथा रथाः ।
नायं वल्गति नर्दति प्रहरति प्रस्फोटयत्युत्कटो
मोहेनैव निहन्ति दानवकुलं वीरोऽन्धकारोऽद्भुतः ॥ १६ ॥

( नेपथ्ये )

अयि दानववीराः ! किमेवमाकुलीभवन्ति भवन्तः ?। नूनमयं पाता-

लोपगतैरमरैरिह प्रहितोऽन्धकारस्तत्केऽपि दैत्यभटाः पातालमुपेत्य देवानुन्मूलयन्तु रुन्धन्तु चान्धकारम्। अयं चान्धकारः कौमुदीमायया मया नियम्यते।

नारदः—( सावेगम् ) अयि तात! अयि देवदेव! अयि कृष्ण! भवन्तस्तावदमरावतीमशून्यां कुरुत यावदहं भवत्प्रसादादविहतगतिर्विज्ञापितमायाप्रपञ्चान्देवान्दिवमानयामि।

ब्रह्माद्याः—साधु साधु।

( इति निष्क्रान्ताः सर्वे )

द्वितीयोऽङ्कः

## तृतीयोऽङ्कः

( ततः प्रविशति विशदाशयः )

**विशदाशयः**—( पुरोऽवलोक्य ) कथमयं स्फुटाक्षर इवावलोक्यते ?। ( निपुणं निरूप्य ) मयाप्युदासीन एषः । किं पुनरसौ ससंरम्भ इव द्रुतपदैर्विभाव्यते ।

( ततः प्रविशति यथानिर्दिष्टः स्फुटाक्षरः )

**स्फुटाक्षरः**—कधं अय्यो विसदासओ ! । ता पणमामि णं । ( सप्रश्रयमुपसृत्य ) अय्य विसदासय ! सव्वसंदेहविसोवसमकारणे बह्मणोत्ति तुमं पणमामि ण उण रायसविवत्तणाणुरोहेणं । [1]

( इति प्रणमति )

**विशदा०**—( सस्मितम् ) स्फुटाक्षर ! आयुष्मान्भव । किं पुनर्भवान्संरब्ध इव विभाव्यते ? ।

**स्फुटा०**—अय्य विसदासय ! को संरंभो [2] ? ।

धुत्तेहिं मोहिदाणं अग्घन्ति ण सच्चवयणरयणाओ ।
अणहिण्णाण पहूणं अलीयालावेसु रत्ताण ॥ १ ॥

अहं खु दाणवनाहेण सव्वतावणेण पाआलमूलमुवगदाणं देवाणं वुत्तन्तं णिरूविदुं पेसिदोम्हि । तदो मए आगदुअ विण्णत्तं जहा किर नारयमहेसिणा विवरीददाणवविरइदमायापवंचणिवेदिअ णिवट्टिदा सव्वेवि देवा कअन्तभावमुवगदव्व कुद्धा तुम्हाणं पुराइं अहिद्दवन्ति । ता किज्जदु पडिविहाणं । तदो पहुणा सव्वतावणेण गव्वुम्हाविलीमहिदाहिदणाणेण साहिक्खेवं अवहत्थिदोम्हि । ता उव्विग्गो जामि णिअभवणं । अय्यं पि अज्ज उव्विग्गं पिव पेक्खामि । ता किं नेदं ? ।

---

१ कथमार्यो विशदाशयः । तत्प्रणमामि ननु । आर्य विशदाशय ! सर्वसन्देहविषोपशमकारणं ब्राह्मण इति त्वां प्रणमामि । न पुनः राजसचिवत्वानुरोधेन ।

२ आर्य विशदाशय ! कः संरम्भः ।

धूर्तैः मोहितानां नार्हन्ति सत्यवचनरत्नानि ।
अनभिज्ञानां प्रभूणामलीकालापेषु रक्तानाम् ॥

अहं खलु दानवनाथेन सर्वतापनेन पातालमूलमुपगतानां देवानां वृत्तान्तं निरूपयितुं प्रेषितोऽस्मि । ततो मया उपगत्य विज्ञातं यथा किल नारदमहेशिना विपरीतदानवविरचितमायाप्रपञ्चं

विश०—( सखेदं निःश्वस्य ) अयि स्फुटाक्षर ! परवानस्मि गुरोर्भगवतो भृगुनन्दनस्य। किं करोमि ?। नाहमन्यथैवंविधं कुलविरुद्धं विद्याविरुद्धं नामविरुद्धं च मायामयं पुण्यमपुण्यं कर्म कुर्याम् ।

स्फुटा०—( ससम्भ्रमम् ) किं उण एआरिसं अच्चाहिदं अय्येण व[illegible]सिदं येण एवं अणुतप्पदि अय्यो[1] ।

विश०—अयि स्फुटाक्षर ! एवमन्यथार्थितोऽस्मि सर्वतापनेन । यथा किल भगवन्विशदाशय ! दुराधर्षा मद्वर्ग्याणां भर्गगोविन्दविरिञ्चिसमधिष्ठिता पौरन्दरी पुरी । तत्तत्र भवता यत्किमपि मायेन्द्रजालमासूत्र्यतां येन ते त्रिदशानां समूलनाशमाशङ्क्य निराशाः स्वयमेव तां परिहरन्ति ।

स्फुटा०—तदा किं कअं अय्येण[2] ?।

विश०—कृतमपि विपरीतफलमेव तेषु तादृशेषु मायेन्द्रजालादिकम् ।

स्फुटा०—( सभयम् ) भअवंत ! ताणं कए किंपि कीरदु अवरं सन्तिकम्मादिअं[3] ।

विश०—( सोद्वेगम् ) अयि स्फुटाक्षर ! किमलीककर्मक्लेशेन ।

उपद्रवाः क्षुद्रसुरासुराणां
शक्यन्त एव प्रतिकर्त्तुमन्ये ।
क्रुद्धेऽन्धकध्वंसिनि शूलपाणौ
कः प्रक्रमः शान्तिकपौष्टिकानाम् ॥ २ ॥

जानामि चैकं शान्तिकम् ।

व्यसनज्वलनेऽमुष्मिन्नविनयपवनप्रसारणोत्फुल्ले ।
हरचरणयुगलसेवा सुरसिन्धुः सापरं शरणम् ॥ ३ ॥

---

निवेद्य निवर्तिता सर्वेऽपि देवाः कृतानन्दभाजमुरगनाः क्रुद्धा युष्माकं पुराण्यभिद्रवन्ति । तत्क्रियतां प्रतिविधानम् । ततः प्रभुणा सर्वतापनेन गर्वोष्मविलीनहिताहितज्ञानेन साधिक्षेपमवहस्तितोऽस्मि । तदुद्विग्नो यामि निजभवनम् । आर्यमपि उद्विग्नमिव प्रेक्षे । तत्किन्न्विदम् ? ।

१ किं पुनः एतादृशमत्याहितमार्येण व्यवसितं, येन एवं अनुतप्यते आर्यः ।

२ तदा किं कृतमार्येण ? ।

३ भगवन् तेषां कृते किमपि करोतु अपरं शान्तिकर्मादिकम् ।

स्फुटा०—ण उण एदं अणुसरिस्सदि अलियगव्वुत्तासिदो सव्वताओ[1]।

विश०—अयि स्फुटाक्षर ! दानवगुरुणाहमस्य साचिव्ये पौरोहित्ये च नियुक्तोऽस्मि तन्नेह मे समुचितमौदास्यम्। त्वमप्यस्य क्रमायातो हितः। त-दास्तामपमानक्लेशः। एहि यथा सम्भवमस्य हितमारभ्यते।

( इत्युभौ परिक्रामतः )

स्फुटा०—( पुरोऽवलोक्य ) परवसोम्हि अय्यस्स। विहावेदु अय्यो एस दा-णवणाहो गोउरपरिसरे हत्थिपीढ समारूढो चिट्ठदि। एसावि दाणववीरवाहिणी सुग्गहणा सव्वपाआरपरिसरे समन्तदो विहावीअदि[2]।

विश०—( पुरोऽवलोक्य सावज्ञं विहस्य ) अयि स्फुटाक्षर !

स्फुरदुरुधनुर्वल्लिश्यामं कठोरशरोत्करं
विषमसमरक्रीडासिंहीविजृम्भितभीषणम्।
दितिसुतभुजारण्यं तावच्चकास्तु निरत्ययं
हरहुतभुजाक्रोधज्वाला न यावदिहापतेत्॥ ४॥

स्फुटा०—अय्य विसदासय ! पच्चासन्नो दाणवणाहो। उअसप्पीअदु दाव[3]।

( ततः प्रविशति यथा निर्दिष्टः सर्वतापः )

सर्वतापः—कथमायात एव विशदाशयः ?। आर्य ! अभिवादयेऽत्रभ-वन्तम्।

विश०—विरतविग्रहः परमानन्दभाजनं भूयाद्दानवेश्वरः।

सर्व०—आसनमलङ्करोतु भवान्।

विश०—( परिजनोपनीतमासनमुपविश्य स्वगतं सानुतापम् ) आः ! कथं मदीय-मुखमुखराहुरुदाहृतिः कालोरगी विनिर्गता। भवत्वविदितैव यातु कुतोऽपीय-म्। ( प्रकाशम् ) अयि दानवेश ! स्फुटाक्षरोऽयं स्फुटाक्षरः। परमहितो दानवे-शस्य प्रसादमेवार्हति।

---

१ न पुनः एतदनुसरिष्यति अलीकगर्वोत्त्रासितः सर्वतापः।

२ परवशोऽस्मि आर्यस्य। विभावयतु आर्यः एष दानवनाथः गोपुरपरिसरे हस्तिपीठसमारूढः तिष्ठति। एषापि दानववीरवाहिनी सुग्रहणा सर्वप्राकारपरिसरे समन्ततो विभाव्यते।

३ आर्य विशदाशय ! प्रत्यासन्नो दानवनाथः। उपसर्प्यतां तावत्।

सर्वतापः—( सहर्षं विहस्य ) क्रोधनः स्फुटाक्षरः । किं क्रियते ? ।

( स्फुटाक्षरः प्रणम्योपविशति )

सर्वतापः—( सोत्कण्ठम् ) आर्य विशदाशय ! अप्यनुष्ठितं तदार्येण ।

विश०—अनादिष्टमप्यभीष्टं देवस्य क्रियते । किं पुनरादिष्टम् ? ।

सर्व०—( सौत्सुक्यम् ) कथयतु कथयतु आर्यः । किं कृतम् ? ।

विश०—माहेन्द्री त्वगनेकलोचनपदैः कीर्णा पताका कृता
पाशेनाम्बुपतेर्दृढं निगडिता कार्तान्तदण्डाग्रतः ।
कौमारस्य शिखण्डिनः कृतरुचिर्बर्हेण गुप्तात्मना
न्यस्ता कल्पमहीरुहे तव यशःस्तोत्रं मया कुर्वता ॥ ५ ॥

प्रस्तावितश्च तत इतो दृश्यविपुलबलजलधिकोलाहलो मायामयः। ततस्तैस्तत्रस्थितैर्देवैर्विपरीतनिर्मितमायावृत्तान्तप्रसृतितः सुज्ञैर्महानुपहासः कृतः । शम्भुना च कृतसंरम्भेण त्वदीयनगरोद्योगाय नियुक्तः क्रौञ्चदारणः ।

सर्व०—( सक्रोधम् ) अयि विशदाशय ! कुलाचार इति कारितेयं मया माया साक्षादेव पितामहादीनाम् ।

उत्कृत्य तानुन्मदलोकपालां-
स्तत्कृत्तिभिः केतनवैजयन्तीः ।
निर्माय भूयो बलसंयुतोऽहं
यास्यामि वज्रायुधराजधानीम् ॥ ६ ॥

विश०—( स्वगतं सविषादम् ) अहो ! दर्पान्धता दानवाधमस्य निगूढवैशसं च । अत एव नैनं भृगुनन्दनोऽपि प्रत्यवेक्षते ।

( नेपथ्ये सगर्वमुच्चैःकारम् )

ज्वालामालाभिरग्नेर्लयसमयमरुत्प्रेरणोल्लासिताभि-
र्भानोस्तैर्भानुसार्थैः क्वथितमरुणितं पत्तनं लौहमेतत् ।
रे रे ! गीर्वाणवीरा इषुधिशरशिरोबाणटङ्कैरयत्ना-
त्सद्यो बन्धूकपुष्पावचयरचनया खण्डशः पाटयध्वम् ॥ ७ ॥

सर्व०—( श्रुत्वा सक्रोधम् ) आः कथमयं वराकः सूर्यः सूर्यतापपुरं पावकसहायः प्लोषति । तिष्ठ रे तिष्ठ ।

अन्यः स सूर्य ! समरः क्षणमात्रमेव
यस्मिन्विषह्य विपदं पुनरभ्युदेषि ।
ध्वान्तापनोदमधिकृत्य निजप्रभाभि-
रत्रैव लोकमपसूर्यमहं करिष्ये ॥ ८ ॥

( इत्युत्थातुमीहते )

विश०—अयि दैत्यराज महावीर ! तिष्ठ तिष्ठ । पावकसहायस्य लब्धावकाशस्य सूर्यस्य मिथ्यागर्वोक्तिरियम् । कोऽयमेतावानिह संरम्भः ।

( सर्वतापः तथैव तिष्ठति )

विश०—( स्वगतं साशङ्कम् ) ताप्यत एव तावत्सूर्यतापः । चन्द्रतापः कथमास्त इति न ज्ञायते ! । (प्रकाशम्) अयि स्फुटाक्षर ! गच्छ क्रियतामप्रमत्तश्चन्द्रतापः ।

स्फुटा०—( सप्रश्रयम् ) यथाऽऽज्ञापयत्यार्यः ।

( इति निष्क्रान्तः )

( पुनर्नेपथ्ये सकरुणम् )

अग्ने वह्नौ विकिरति रुषा रश्मिमालाः शिखालीः
लौहेऽमुष्मिन्नसुरनगरे भ्राष्ट्रवद्दह्यमाने ।
लाजा दावानल इव हहा निर्गमोद्दण्डझम्पा
भूयो भूयः स्फुरदरतयो दैत्यवीराः पतन्ति ॥ ९ ॥

सर्व०—(सक्रोधं ससंरम्भम्) आः ! कथं दह्यत एव मे भ्रातुः सूर्यतापस्य तादृशं दुर्मदं दैत्यबलम् । तदलमनेन मृषा भुजभारधारणायासेन । (इति संरम्भं नाटयति)

विश०—अयि दैत्यराज ! न युज्यते निकटतो भवितुम् । दूरस्थानां भवतां दूरतो मृत्युः ।

( सर्वतापनः तथैव तिष्ठति )

विश०—( सोल्लासम् ) अयि दैत्यनाथ ! पश्य पश्य प्लोषप्रकारसमासादितसिन्दूरपूराडम्बरं त्वद्भ्रातुरिदं लौहं पुरं वियदङ्गणमनुधावति ।

सर्व०—( विभाव्य सोल्लासम् )

सूर्यास्पदं किमु जिघृक्षुरय दिधक्षुः
किं वा पराणि भुवनान्युपरिस्थितानि ।

आकाशकोटिमधिरोहति दैत्यनाथः
पाथोधिमुत्थित इवौर्वशिखी विशोष्य ॥ १० ॥

( पुनर्नेपथ्ये )

क्रोधाध्मातदिनाधिनाथकिरणैः स्फारीकृताभिर्बला-
देतल्लोहपुरं तथा हुतभुजो ज्वालाभिरुत्ताप्यते ।
पौराणां ज्वलतां यथा चटचटाकोलाहलोन्मिश्रितो
दुर्गन्धोऽयमुदञ्चति श्रुतिपथघ्राणेन्द्रियद्रोहकृत् ॥ ११ ॥

सर्व०—( श्रुत्वा सक्रोधम् ) अये ! लब्धावकाशाः खेचरा इमे प्रगल्भन्ते । ( सावज्ञं विहस्य ) अयि मूर्खाः ! क एष विषादावसरे प्रहर्षः ।

तपनदहनदाहैः स्वादिराङ्गाररूपं
पुरमिदमभवद्यन्मृत्युशङ्काविमुक्तम् ।
इदमभिमतमासीद्युद्धखेदं विनैव
ज्वलयतु तदिदानीं स्पर्शमात्रेण शत्रून् ॥ १२ ॥

विश०—( सहर्षम् ) अयि दानवनाथ ! दिष्ट्या वर्द्धसे । विभावय तावदूर्ध्वम् ।

दधत्कृष्णां छायां स्खलदरुणकान्तिव्यतिकरं
स्फुरद्भिश्छाङ्कारैर्मुखरितककुप्चक्रमुरुभिः ।
लसद्भूमस्तोमैर्जनितयमुनासङ्गसुभगे
वियद्गङ्गापूरे पुरमिदमहो ! मज्जतितराम् ॥ १३ ॥

तदस्य प्रशान्त एव दाहपरिभवः । दीर्घायुषोऽमी दानवाः संवृत्ताः ।

सर्व०—( सहर्षम् ) अहो ! भ्रातुः सूर्यतापस्य शौर्यं, यदिमां दाहविपदं विषह्य मन्दाकिनीजलावगाहेन लोहमयं नगरमनपायतां नीतम् । तदिदानीं चन्द्रतापस्यापायशङ्का परं मां बाधते ।

( नेपथ्ये )

यस्मिन्नासीत्प्रकम्पः कुसुमशरकृतो यत्र मुग्धाङ्गनाना-
मङ्गे संकोचभङ्गिः सुरतपरिकरे यत्र सीत्कारशब्दः ।
तौषारं वर्षमुग्रं किरति हिमकरे शैलराजे च रोषा-
त्तस्मिंस्तास्ताः सचेष्टाः कथमहह ! पुरे चान्द्रतापेऽप्यभूवन् ॥ १४ ॥

सर्व०—( श्रुत्वा सक्रोधम् ) अयि पापाः! किमेवं भवद्भिरुद्घुष्यते। तथाहि-

सोऽयं पतङ्गाद्दहनस्य भङ्गो
दावानलादेष समुद्रशोषः।
गरुत्मतो राजिलतः क्षयोऽयं
यच्चन्द्रतः सीदति चन्द्रतापः॥ १५॥

( पुनर्नेपथ्ये सगर्वम् )

निवसति वडवाग्निर्यत्र सायामधामा
विहरति च महोष्मा यत्र हालाहलीयः।
मयि शशिनि सरोषे मद्गुरोस्तस्य वार्द्धेः
कुरु शरणगतस्त्वं चन्द्रतापात्मरक्षाम्॥ १६॥

सर्व०—विशदाशय! मम ज्ञातेर्विधुन्तुदस्य भक्ष्योऽयं, तदेनं भक्षयतो मम न दोषोऽस्ति। कवलयाम्येनम्।

विश०—( सप्रश्रयम् ) अयि दानवेश! भवानेनं कवलयतु। भवन्निदेशेन राहुरेव वा बाढमपुनर्भवाय कवलयतु। किंतु चन्द्रतापसमीपं प्रहितः प्रतीक्ष्यतां स्फुटाक्षरः।

( ततः प्रविशति स्फुटाक्षरः )

स्फुटा०—( सखेदम् ) अहह! विहिविवरीददाए वैभवंपि विवरीदफलं भोदि। तंय्येव चंदतावनअरस्स रुप्पमयं पाआरं रुप्पमआइं सोहाइं एदस्सि तुसारअरसमरम्मि अइतुसारदाए अणत्थहलं संवुत्तं।[1]

सर्व०—( स्फुटाक्षरं दृष्ट्वा ससम्भ्रमम् ) अयि दौवारिकाः! प्रेतः कोऽप्ययं मामभ्युपैति।

स्फुटा०—( सावेगम् ) अयि णाह! णहु णहु अहं पेदो भूओ वेआलो वा। अहं फुडक्खरो देवस्स चरो चंदताववुत्तन्तं णिरूविदं गदोम्हि। तं उण मह अवत्थाए य्येव विन्नत्तं..........ए सिसिरेण समरो दिट्ठो। ण कआवि मए एआरिसो तुसारसंभवो अणुभूदो। ता किंपि परित्ताणं करेदु दाणवणाहो।[2]

---

१ अहह! विधिविपरीततया वैभवमपि विपरीतफलं भवति। तदेव चन्द्रतापनगरस्य रूप्यमयः प्राकारः रूप्यमयानि सौधानि एतस्मिन् तुषारकरसमरे तुषारतया अनर्थफलं संवृत्तम्।

२ अयि नाथ! न खलु न खलु अहं प्रेतो भूतो वेतालो वा। अहं स्फुटाक्षरो देवस्य चरश्चन्द्रतापवृत्तान्तं निरूपयितुं गतोऽस्मि। तत् पुनः मम अवस्थयैव विज्ञप्तम्......शिशिरेण समरो दृष्टः। न कदापि मया एतादृशः तुषारसम्भवोऽनुभूतः। तत्किमपि परित्राणं करोतु दानवनाथः।

सर्व०—( सक्रोधम् ) एष निर्दहामि हिमदीधितिं हिमाचलं च । ( इति संरम्भं नाटयति )

विश०—( सप्रश्रयम् ) अयि दानवेश्वर ! कृतं कृतं संरम्भेण ।

क्षयी हिमांशुर्हिमपर्वतोऽपि
त्रिविष्टपाधीश्वरलूनपक्षः ।
युद्धाय सन्नह्यसि यत्तयोस्त्वं
मन्दाक्षभारः कथमेष सह्यः ? ॥ १७ ॥

सर्व०—तदिहस्थ एव दहनास्त्रं प्रयुञ्जे । ( इति तथा करोति )

( नेपथ्ये )

प्रशमितहिमखेदं पावकास्त्रेण येन
क्षणमिव पुरमासीत्सुस्थितं चान्द्रतापम् ।
अहह ! निबिडदाहद्रावितद्वारसौधं
प्रबलरजतपङ्कैस्तद्दहत्याशु दैत्यान् ॥ १८ ॥

सर्व०—( श्रुत्वा सक्रोधम् ) उपसंहराम्येष आग्नेयास्त्रम् । ( इति तथा करोति )

विश०—अहह ! सुमहानयं सङ्कटः । आग्नेयास्त्रप्रयोगे वियोगेन शिशिराभिभवः । आग्नेयास्त्रं च राजतं विलालयति । तद्गच्छ स्फुटाक्षर ! ब्रूहि चन्द्रतापं राजतपुरमनर्थनिमित्तं परिहृत्य बहिः स्थीयतां बहिर्युध्यताम् ।

स्फुटा०—यदाऽऽदिशति आर्यः । ( इति निष्क्रामति )

विश०—(वामाक्षिस्पन्दनं सूचयित्वा) अहह ! किमेतदाचष्टे स्पन्दमानं मे वामं विलोचनम् । अस्तु सर्वाभ्युदयभाजनं सर्वतापः । अस्तु चाप्रतिहततेजा दैत्यगुरुः ।

( नेपथ्ये )

तावद्वस्त्रिपुरासुराः ! प्रसृमरं त्रैलोक्यजिद्वैभवं
स्यूतः पङ्कजसम्भवेन निबिडस्तावद्वरः कङ्कटः ।
तत्कन्दर्पमहेन्धनं त्रिभुवनप्लोषप्रगल्भं क्षये
यावन्नोद्घटते मनागपि रुषा त्र्यक्षस्य भालेक्षणम् ॥ १९ ॥

विश०—( नभोऽवलोक्य ससम्भ्रमम् ) कथमयं कुमारो नन्दिसनाथविपुलबलपरीवारः समापतति ! । तथाहि—

तडिद्वद्भिर्मेघैरिव विलसदुत्तालरसनै-
विशालैर्वेतालैर्वियति पृथुकोलाहलमयः ।
मुदा केकाशब्दैर्गुरुसुभटनादेऽप्यपिहितै-
र्मयूरः कौमारो मुखरयति दिक्चक्रमनिशम् ॥ २० ॥

अयि दानवेश ! एष कुमारस्त्वां सङ्ग्रामयितुमभ्युपैति । गृहाण कार्मुकम् ।

( ततः प्रविशति यथा निर्दिष्टः कुमारः )

सर्व०—( सावज्ञम् ) आः ! बालको विशाखः सर्वतापं योधयिष्यति ? ( आकाशे लक्ष्यं बद्ध्वा )

धन्यो धन्वा पिनाकः कटुपटुगतयो हेतयः शूलमुख्या-
श्चण्डास्ते बाहुदण्डाः प्रवणशिखिशिखाभीषणं भालचक्षुः ।
बालं दुर्लालनीयं किमिति पशुपते ! प्राहिणोः सङ्गरार्थं

( सोपहासम् )

वीराणां युद्धकेलिव्यतिकरमरणे कः क्रमोऽतिक्रमो वा ॥ २१ ॥

कुमारः—( सोपहासम् ) अये तातेन सार्द्धं युद्धश्रद्धालुर्दानवाधमः । अयि वीर !

किं त्वां भस्मीकरोमि स्मरमिव सहसा किं नु ते बाहुदण्ड-
स्तम्भं जम्भस्य शत्रोरिव युधि विवधे क्ष्वेडवर्त्तिं गिलामि ।
छत्राभं शक्तिदण्डग्रथितमथ करोम्यन्धकस्येव तेऽङ्गं
कीदृक्ते तात ! युद्धं सुखयति दनुजश्रेष्ठ ! तादृग्विदध्याम् ॥२२॥

सर्व०—अयि कुमार ! बालकोऽसि । त्वामनुकम्पे । यदि सत्यं सङ्गरे निष्कम्पोऽसि तदाविष्कुरु कार्मुककर्मठत्वम् ।

त्वां न क्षिणोमि शिखिवाहनमन्दशक्तिं
युद्धाम्बुधौ सुगहने नहि तारकोऽहम् ।
तस्मिंस्तदा शरवणे जननिस्त्ववासी-
दस्मिन्युधः शरवणे मरणं भजस्व ॥ २३ ॥

कुमारः—( ससम्भ्रमम् )

शक्तिर्गतैव तव दानव ! शक्तियोगः
शक्त्या भविष्यति मया हृदि मुक्तया ते ।

त्वद्विग्रहग्रहिलता न भविष्यतीयं
बाणैर्ममाशु भवितासि परासुरेव ॥ २४ ॥

(इति बाणवर्षं नाटयति)

सर्व०—(सावज्ञं विहस्य) अयि विशाख! सुखयति मां कुतूहलिनं तव बालस्य धार्ष्ट्यं, तन्नाहं त्वयि धनुः सज्जं करिष्ये। खेलतु भवान्यथाकामं म[illegible]न्ये।

नन्दी—(अपवार्य) कुमार! विरिञ्चिवरदानेन केवला अमरा एव त्रिपुरासुरास्तदलमनेन सार्द्धं मुधा युद्धायासेन। बलमेवास्य विदलय बाणवर्षैः।

(कुमारः तथा करोति)

नन्दी—(सहर्षं सोल्लासम्) विजयतां कुमारः। इतस्त्वया बाणगणैर्वेतालेश्च विदलिता एव दानवाः।

कुमारः—अयि शिलादसूनो! कथं य एव दानवा निहतास्त एव प्रतिजीविता उदायुधाः समायान्ति?। तत्किमेतत्?।

विश०—रे रे दैत्यवीराः! समरोपरतान्वीरानमृतकुण्डे मज्जयत यथा प्रत्युज्जीविताः समधिकबलं युध्यन्ते।

(नेपथ्ये)

क्रियत एवैतत्। किन्न पश्यत्यमात्यस्तथैव बलमक्षयम्।

कुमारः—(सोल्लासम्) अयि सर्वताप!

सततममृतकुण्डं वर्द्धतां वर्द्धतां ते
समरनिहतवीरा येन जीवन्ति भूयः।
विरतमरणशङ्कैस्त्वद्भटैर्युध्यमानै-
र्भवति मम यतोऽयं युद्धकामः कृतार्थः ॥ २५ ॥

नन्दी—(अपवार्य) अयि कुमार! आग्नेयबाणलूनैः स्वर्णप्राकारखण्डैः पूरयामृतकुण्डम्। नान्यथा क्षीयन्ते दानवाक्षौहिण्यः।

(कुमारः तथा करोति)

(नेपथ्ये)

स्वर्णप्राकारखण्डैः शिखिविशिखशिखाखण्ड्यमानैः सुतप्तैः
पूर्णं पीयूषकुण्डं छमिति मुखरितैः पीतपीयूषपूरैः।

कष्टं कष्टं विनष्टैः कथमिव समरे दानवैर्जीवितव्यं
तत्पूर्वोऽयं प्रविष्टः प्रसभमपचयः सर्वतापस्य सैन्ये ॥ २६ ॥

विश०—( समर्थम् ) अयि कातराः! केयमाकुलता!। नन्दति भृगुनन्दने क्व दानवानामपचयः?। अयि दानवेश सर्वताप! चिन्तय भार्गवं भगवन्तम्। अहमपि चिन्तयामि। ( उभौ चिन्तां नाट्यतः)

( ततः प्रविशति भार्गवः )

भार्गवः—( सगर्वम् )

अशोष्योऽहमपेयोऽहमहार्योऽहमनश्वरः।
मायामृते च दैत्यानां मृत्योरभिभवः कुतः ॥ २७ ॥

तां प्रतिजीविता दानवाः क्षपयन्तु देववाहिनीं, रक्षणीयः परमयं मम भ्राता कुमारः। अहं हि भगवता भर्गेण पुत्रः परिकल्पितोऽस्मि।

नन्दी—( सखेदम् ) अये भार्गवः सम्प्राप्तः। अनेन हि देवदेवादेव मृतसंजीवनी विद्या समासादिता। तदिदानीमायासैकफलो दनुजैः सह समरसंमर्दः। न च मे महेशनिदेशमन्तरेण युज्यते समरादपावर्तयितुं कुमारः।

( ततः प्रविशति नारदः )

नारदः—( सहर्षम् ) अहो जगत्प्रभोः शम्भोर्मयि परिहासो, यदहमयि कलिप्रिय! वारय कुमारसर्वतापयोः समरसम्मर्दमिति विहस्य प्रेषितोऽस्मि। ममापि न तादृगिदानीं कलहावलोकनकुतूहलित्वम्। यदहं लोहपुरसमरसम्मर्दसंदर्शनेनार्द्धतृप्तो राजतपुरकदनावलोकनेन सुतरां सुतृप्तः संवृत्तः। अहह! किमुच्यते लोहपुरप्लोषणेन पवनपावकयोः शौर्यं हिमांशोर्हिमवतश्च नीहारभारेण राजतपुरपूरणम्। उभयत्रापि निर्गत्वरासुरसार्थबन्धने पाशपाणेर्लघुहस्तता। तावतामपि जीवितापहरणे किं वर्णयामि समरसामर्थ्यम्। तदिदानीं त्वरितमपवर्तयामि समरतः कार्त्तिकेयम्। ( पुरोऽवलोक्य सहर्षाश्चर्यम् ) कथमयं कार्त्तिकेयो विष्णुपदमभिवर्षति शरासारम्। अहह—

नायं मुखेनैव पितुर्महेशा-
त्पराक्रमेणाप्यधिकः षडास्यः।
यः पूज्यते विस्मृतशम्भुशौर्यै-
र्मन्दारदामप्रकरेण सिद्धैः ॥ २८ ॥

( तदुपसृत्य वारयामि । उपसृत्य ) अयि कुमार ! अयि शिलादसूनो ! समादिशति वो भगवान्भर्गः । अयं हि भार्गवो मया पुत्रत्वेन सम्भावितस्तत्किमेतत्परिगृहीतं सर्वतापं दानवमभितापयन्मां ऱ्हेपयसि ।

**नन्दी**—( स्वगतम् ) अस्मदभिमतमेवोपक्रान्तमेतेन । ( प्रकाशम् ) यथाऽऽदिशति देवदेवः । ( कार्त्तिकेयं प्रति ) आयुष्मन्ननुल्लङ्घ्यः पितृनिदेशस्तदास्तां तावद्युद्धम् ।

**कुमारः**—( स्वगतं सखेदम् ) अहो मे मन्दभाग्यता, यदेतस्य [illegible]दासादितस्याहवमहोत्सवस्य प्रत्यूहः समापतितः । ( प्रकाशम् ) ( निःश्वस्य ) यथाऽऽदिशन्ति तातपादाः । ( इति सपरिवारा निष्क्रामन्ति )

**शुक्रः**—( सहर्षं स्वगतम् ) अहो ! दानवेषु क्रुद्धस्यापि भगवतो वृषभध्वजस्य मयि नवं नवं सन्मानम् ( प्रकाशम् ) अयि दानवेश ! सर्वताप ! अयि वत्स विशदाशय ! इत आगम्यतां सम्भावयामः समरपीडितानसुरान् ।

( इति निष्क्रान्ताः सर्वे )

**तृतीयोऽङ्कः**

---

## चतुर्थोऽङ्कः

( नेपथ्ये )

प्रसृमरमयूरविशिख: सूर्यः संहरति वैरितिमिरौघम् ।
नहि यस्य रथरयछ्र्या दूरमदूरं किमप्यस्ति ॥ १ ॥

विश०—( श्रुत्वा प्रतिबुध्य ) कथमायातं प्रभातम् । आः ! केनेमां प्रातरेव दुरुपश्रुतिं श्रावितोऽस्मि । अथवा स्तवमुखः कोपि दे.................................... तत् । तदहं गत्वा गुरोर्भगवतो भार्गवस्य पादारविन्दवन्दनां विदधे । ( परिक्रम्य पुरोऽवलोक्य ) अयमस्ति भगवान्भार्गवः.................................................रेनमन्तरपद्र-व्यदुराभाकरम्बितं स्फटिकमिव कश्मलमवलोकयामि ( सहसोपसृत्य ) भगवन्भार्गव! एष त्वां.........ऽभिवादयते ।

शुक्रः—सौम्य ! चिराय जीव ।

विश०—( सप्रश्रयम् ) किं पुनरद्य भगवन्तमन्यादृशमिव विभावयामि ।

शुक्रः—( सखेदम् ) अयि विशदाशय ! दुःस्वप्नदर्शनोपनीतवैमनस्येन मलिनीकृतोऽस्मि । तदहमिदानीं किमपि शान्तिकमनुष्ठातुं यतिष्ये ।

( नेपथ्ये )

अस्मत्पुण्यप्रकर्षेण षोडशाप्येकतां गताः ।
अधुना सद्य एवामी त्रयो यास्यन्ति पञ्चताम् ॥ २ ॥

विश०—( आकर्ण्य ) केयमाकाशसरस्वत्या प्रहेलिकेवोदाहृता ।

शुक्रः—( क्षणमिव ध्यानं नाटयित्वा ) वत्स विशदाशय ! नेयमाकाशसरस्वती व्याहरति । चित्रशिखण्डिनोऽमी त्रिपुरासुरोत्तापितास्तद्विनाशायोत्सहन्ते । विवेचितं मया महेशप्रमुखा दिगिशा हरिविरिञ्चिक्रौञ्चारिनगेन्द्रनागेन्द्र-चन्द्रसूर्यधर्माः षोडशापि त्रिपुरासुरवधाय बद्धकक्षाः संवृत्ता ऐक्यं गताः ।

विश०—( सखेदम् ) अहह ! अत्याहितमत्याहितम् ।

शुक्रः—वत्स विशदाशय ! आकथनं दुःस्वप्नानां श्रेयस्तदिदानीं मुनि-वचनेन मुखरीकृतोऽस्मि । आकर्णयतु भवान् ।

सर्वाङ्गान्यङ्गधारः शिरसि विनिहितोत्तालबन्धूकमाल-
स्तिष्ठन्पृष्ठे वसानो वसनमनुकृतप्लक्षबालप्रवालम् ।
बिभ्रद्वैवाहिकश्रीपरिकरमखिलं मङ्गलोत्तालतूर्यं
दृष्टो गच्छन्नवाचीं रजनिपरिणतौ सर्वतापो मयाद्य ॥ ३ ॥

तद्यावदहं शान्तिकं वैरिवञ्चनाप्रकारं च ( कर्णे एवमेव ) समाप्यागच्छामि तावदिह भवताऽवहितेन स्थातव्यम् । उत्साहभङ्गशङ्कया सर्वतापस्याप्यनिवेद्य यास्यामि । नचैते दूरस्थाः कालस्य गोचराः । अतो न त्वया भेतव्यम् ।

विश०—( सखेदं निःश्वस्य )

चरन्तु दूरतः स्वैरं मृत्योरेते न दूरतः ।
येषु पातकपङ्केषु सरोषो वृषभध्वजः ॥ ४ ॥

शुक्रः—अयि मा विषीद ।

यद्यद्भवति विधेयं यदा यदा तद्विधेहि सद्बुद्ध्या ।
भगवानचिन्त्यचरितो वत्स ! विधेयो विधिः कस्य ॥ ५ ॥

भगवन्तमपि वरदातारं धातारं नारदेनोद्दीप्यमानक्रोधानलं पश्यामि ध्यानमयेन नयनेन । तद्गच्छावहितो भव । अहमपि समीहितं साधयामि ।

( इति निष्क्रान्तौ )

विष्कम्भकः

---

( ततः प्रविशति विरिञ्चिर्नारदश्च )

विरिञ्चिः—( सनिर्वेदम् ) वत्स नारद ! किं मां कदर्थयसि ? ।

मद्वाणीसारणी या स्फुरदमृतवरा दैत्यवृक्षानपुष्णात्
सद्यः सैवोग्रदावानललहरिरिव ज्वालयेत्तान्कथं नु ।
ऐश्वर्यं यस्य लोकत्रितयकरुणया विक्रमव्याहताज्ञं
देवो रौद्रः स रौद्रैर्दलयतु दनुजान्विग्रहैः कालपक्कान् ॥ ६ ॥

नारदः—तात ! अलं कम्पेन । माननीयस्य तव शासनस्यैष प्रभावः, यदमी त्रिपुरासुरकीटका इयतीं कोटिमारूढास्तद्वधं दुर्विधेयं भगवान्भर्ग एवाङ्गीकुरुते । तदलमिदानीमलीकपरामर्शमन्थरतया । पश्यन्तु तातपादाः ।

देवस्य प्रमथाधिपस्य रथिनः पृथ्वी रथः स्यात्परं
तात ! त्वामपहाय तत्र कतमः सारथ्यकर्मक्षमः ।

कोदण्डो गिरिराज एव भुजगप्रष्ठस्तदीयो गुणः
स्यादौचित्यवती त्रिविक्रमतनोस्तस्यैव तद्बाणता ॥ ७ ॥

( नेपथ्ये )

भ्रातर्नारद ! त्वरय त्वरय तातपादान् । आरूढ एवाऽयं भगवान्धन्विधुर्यो धूर्जटिः पृथ्वीरथम् ।

नारदः—( सहर्षौत्सुक्यम् ) अयि तात ! ज्येष्ठस्तव सुतो धर्मोऽयं व्याहरति । पश्य—

देवेनान्धकसूदनेन रथिना सोत्साहमध्यासितः
प्राप्तोऽयं पृथिवीरथोऽद्भुततमः सप्तानिलाश्वैश्चलन् ।
चक्रीभूतसुधाकरार्ककिरणस्तोमेन विस्तारिणा
स्वर्गङ्गासरसीरुहेषु युगपन्निद्राप्रबोधौ दधन् ॥ ८ ॥

एते च महेन्द्रप्रभृतयोऽदितिजा अनुधावन्ति ।

ब्रह्मा—( विलोक्य सौत्सुक्यम् ) तात नारद ! एह्येहि । ( उभावुपसृत्य रथाधिरोहणं नाटयतः )

ब्रह्मा—( महेशमालोक्य सप्रश्रयम् ) आयुष्मान्–( इत्यर्धोक्तौ सव्रीडस्मितम् ) भगवन्भर्ग ! एष त्वां तव सारथिः प्रणमति ।

महेशः—( मत इत्यर्धोक्तौ सलज्जम्) शान्तं पापम् । प्रणमामि पितामहम् । कुरु सारथ्यम् ।

( ब्रह्मा नाट्येन सारथ्यमध्यास्ते )

नारदः—( ससम्भ्रमम् )

धनुर्धनुर्द्धरं लक्ष्यं यो मुक्तोऽपि न मुञ्चति ।
सोऽयं निर्वाणकृद्बाणस्तात ! विष्णुः प्रणम्यताम् ॥ ९ ॥

ब्रह्मा—( ससम्भ्रमं प्रणम्य ) वत्स नारद !

अनेनाविद्धमेवास्ति विष्णुबाणेन विष्टपम् ।
अस्येच्छया सपक्षस्य जीवति म्रियतेऽथवा ॥ १० ॥

वासुदेवः—( ससम्भ्रमम् ) अभिवादयतेऽत्र भगवन्तमाचार्यम् । ( सर्वे यथोचितमुपविशन्ति )

महेशः—( पुरोऽवलोक्य साश्चर्यम् ) आः पश्यत पश्यत ।

सौवर्णं पुरमभ्युपैति निकटं यस्योत्कटैरंशुभिः
संवीतं वियदङ्गणं तुलयति स्वर्णाचलोपत्यकाः ।

विष्णुः—( साश्चर्यम् )

गङ्गाडम्बरकारि कान्तिपटलं तत्पृष्ठतो राजतं

ब्रह्मा—( साश्चर्यम् )

प्रत्यग्राम्बुदवृन्दविभ्रमकरं लौहं तदीयान्तिके ॥ ११ ॥

महेशः—अहो दानवानां शौर्यमदमोहितानां बुद्धिविपर्ययो यदमी स्वयमेवैकशरशरव्यतां प्रतिपद्यन्ते ।

विष्णुः—( सवितर्कम् ) कथं नु ते शुक्रसचिवा एवं विमुह्यन्ति । नूनमन्यैव सा क्वचिदस्ति सत्या पुरत्रयी । इयं पुनरन्यैव ।

( ततः प्रविशति सौवर्णेन पुरेण विहरन्सपरिवारः सर्वतापः )

सर्वतापः—( सगर्वरोषम् ) आर्य विशदाशय ! पश्य पश्य देवानां दुर्विनयं यदियमस्मत्प्रतियोगिनी अपरा पुरत्रयी निर्मिता । गच्छ रे स्फुटाक्षर ! गच्छ । आनय सूर्यतापचन्द्रतापौ सपुरौ । दृश्यतामियं देवनिर्मिता पुरत्रयी ।

स्फुटा०—(पुरोऽवलोक्य) कधं आगदय्येव सुज्जतावचंदतावा। पेक्खदु देवो[1]।

सर्व०—( दृष्ट्वा सहर्षम् ) साधु साधु एताभ्यामपि दृष्टैव मायामयी त्रिपुरी।

विश०—(साकूतं विहस्य) दैत्यनाथ ! किमाकुलोसि?। निवर्तय पुरत्रयम् ।

सर्व०—( सक्रोधम् ) अहो भवतः साचिव्यम् । द्वितीया पुरत्रयी योद्धुमभ्येति । त्वं च विहससि ।

( विशदाशयः सौत्सुक्यमुत्थाय कर्णे एवमेवेति )

सर्व०—( सक्रोधम् ) आः ! किमनेन मृषा कर्णजापेन । को विश्वसिति भवतां देवतानुगतमुनिकुलोत्पन्नानां द्विजन्मनाम् । यद्येवं किमिति मामसम्भाष्यैव शुक्रो गतः । एवंकृते किमस्मासूपकृतं, प्रत्युतापकृतमेव । तथाहि—

पुरत्रयं दाहयिता शिवेन
निर्माय मायामयि चेत्स शुक्रः ।

---

१ कथमागतावेव सूर्यतापचन्द्रतापौ । प्रेक्षतां देवः ।

कृतो हरेण त्रिपुरस्य दाह-
स्तदेष रूढः परमोऽपवादः ॥ १२ ॥

तदार्य ! यथेच्छं गम्यतां तावत् । यदस्मासु भावि तद्भविष्यति ।

विश०—( सरोषं स्वगतम् ) नूनं प्रत्यासन्नमशुभमस्य । विपर्यस्ता बुद्धिस्त-देवमेवास्तु । ( प्रकाशम् ) एष यामि गुरोः सकाशम् । ( इति निष्क्रामति )

महेशः—( सत्यपुरत्रयीमालोक्य साश्चर्यम् ) फलितं त्रिविक्रमवितर्केण । आगता पुरत्रयीयमपरा ।

ब्रह्मा—का पुनरनयोः सत्या का मायामयीति न ज्ञायते ।

नारदः—( सौत्सुक्यम् ) किमनेन परामर्शप्रसारेण । बाणगोचरतां गता इयमपि वध्यताम् ।

कृष्णः—( सपरिहासम् ) रोचते कलिप्रियाय । किन्तु क्षणं प्रतीक्ष्यताम् ।

सर्व०—( सगर्वरोषम् ) अयि सूर्यताप ! अयि चन्द्रताप ! त्वर्यतां त्वर्यतां हन्यतां हन्यतामियं देवनिर्मिता पुरत्रयी । ( इति बाणवर्षं नाटयन्ति )

महेशः—( साश्चर्यमालोक्य ) अहह ! दृश्यतां दृश्यताम् । ( सवितर्कम् )

अयमरजनिजन्मा किन्नु कोऽप्यन्धकारः
किमयमनलबाष्पः कोऽपि धूम्यावितानः ।
अयमशुभसमुत्थः शालभः किं समूहः
किमयमसुरसैन्यान्निर्गतो बाणपूरः ॥ १३ ॥

कृष्णः—( साश्चर्यम् ) कथमपगतैव प्रथमोद्गता पुरत्रयी । अहो महीयानयं मोहो यदियं दैत्यपक्षपातिनी द्वितीया त्रिपुरी । तत्किमिति सर्वतापादिभिर्द्रा-विता । नूनमेषा सुगुप्तं शुक्रनिर्मिता भविष्यत्यनभिज्ञैरेभिर्दैत्यैरुच्छिद्यते । भवत्वभिमतमेव नः ।

सर्व०—( विभाव्य सगर्वम् ) कथमपसृतैव देवसृष्टा कपटत्रिपुरी । ( सक्रोधमा-काशे लक्ष्यं बध्वा )

रे रे ! सुराः समरकर्मणि निर्विकारे
क्लीबाः किमित्यहह ! कैतवमारभध्वम् ।
किन्ते वयं दितिसुताः कपटप्रधानै-
स्तैस्तैर्भवद्विलसितैः प्रलयं ययुर्ये ॥ १४ ॥

नारदः—(सौत्सुक्यम्) किमिदानीं प्रतीक्ष्यते। प्रत्यासन्ना एव हन्यन्ताममी।

महेशः—अयि नारद ! कोऽयमवसरः पराक्रमस्य ।

स्वेनैवेषुपथे भवन्ति यदमी दर्पज्वरोन्मोहिताः
पाणिं कस्य धनुर्ग्रहीष्यति हहा ! हन्तुं तदेतानपि ।
तुच्छे कर्मणि भूरिडम्बरधरं धिग्धन्विनं धिग्धनु-
र्धिग्बाणं धिगमुं रणव्यतिकरं धिक्सारथिं धिग्रथम् ॥ १५ ॥

कृष्णः—(सोत्प्रासम्) अयि कलिप्रिय ! साधूक्तं परमेश्वरेण । प्रतीक्षतां, भवन्तु तावदमी भूयोऽपि तथैव दुर्द्धर्षाः । दुराधर्षे हि विद्विषि विक्रमः प्रकर्षमभ्युपपद्यते ।

स्फुटा०—(सप्रश्रयम्) नाह सव्वताव! णिद्दलिदो दाव एस वैरीण वंचणापवंचो । ता संपइ तहतहव्वेअ णिअट्ठाणेसु संचरन्तु सुज्जतावचंदातवा । ण एआरिसी णीदी भोदि, जं एक्कठाणे चिट्ठीअदि[1] ।

सर्व०—(सोत्प्रासम्) स्फुटाक्षर ! क्रोधनोऽसि । कस्ते वचनमुल्लङ्घयितुं पर्याप्तः ? । कारय यथोचितम् ।

स्फुटा०—जं आणवेदि सामी—(इति निष्क्रम्य तथा तथा कारयति)

कृष्णः—(ससम्भ्रममवलोक्य) अयि महेश ! दृश्यतां दृश्यताम् । [illegible]नीममी सुष्ठु समधिकान्तराले संवृत्ता न जाने घातगोचरे भविष्यन्ति न [illegible]ति ।

महेशः—(सहर्षोल्लासं सहसोत्थाय) हता एवामी । क इदानीं सन्देहः । वाहयतु भगवान्विरिञ्चिर्वेगेन रथम्

(विरिञ्चिस्तथा करोति)

नारदः—(व्याकुलतामभिनयन्ससम्भ्रमम्) आः ! कथमात्मानमपि नानेन रथरयेण जानामि । क्व मे दर्शनश्रवणशक्ती । अयि परमेश ! तदहं कुतूहलावलोकनतरलमुनिमण्डलमध्ये कैलासारूढो द्रक्ष्यामि । (इत्यन्तरिक्षगत्या तथा करोति)

नारदः—(पुरोऽवलोक्य साश्चर्यम्)

बाणो हरिर्विजयतेऽन्धकसूदनस्य
वाग्गोचरः भवति यस्य न वेगलक्ष्मीः ।

---

१ नाथ सर्व्वताप ! निर्दलितस्तावदेष वैरिणां वञ्चनाप्रपञ्चः । तत्सम्प्रति तथा तथैव निजस्थानेषु सञ्चरतां सूर्यतापचन्द्रतापौ । नैतादृशी नीतिर्भवति यदेकस्थाने स्थीयते ।

लक्ष्यं किमप्यभवदन्यदिवाभिगम्यं
मार्गायितं पुनरमुष्य पुरत्रयेण ॥ १६ ॥

आर्य धर्म ! पश्य पश्य । कृतार्थय चक्षुषी । युगपदेव ज्वलतीयं पुरत्रयी शङ्करशरानलेन ।

धर्मः—( सपरितोषमालोक्य ) साधु साधु ।

प्राग्यागविघ्नप्रथितोरुवैर-
स्त्रेतानलोऽयं कलितावकाशः ।
बलेन शम्भोस्त्रितयं पुराणां
ज्वालाकरालः कवलीकरोति ॥ १७ ॥

( नेपथ्ये )

अस्पृश्यस्पर्शकारः प्रसभमपनयन्वर्णभेदव्यवस्थां
लोकं निःसीमशोकं रुदितमयदृशं कल्पयन्कान्दिशीकम् ।
कुर्वन्सन्मार्गरोधं शिशुयुवतिगुरुध्वंसकर्मण्यशङ्कः
कुस्वामीवैष वह्निः प्रलयमुपनयत्याशु हा ! त्रिकपुराणि ॥ १८ ॥

अपि च—

शय्यां श्रान्त इवाभ्युपैति नृपवद्भद्रासनं सेवते
गर्भागारमुपैति कामुक इव द्रोहीव रुन्धे दिशः ।
स्वैरं वीर इवाश्वहस्तिनिवहान्मश्नाति वह्न्यात्मकः
कोऽयं कोऽयमहो पुरत्रयकृते धिग्देव ! सृष्टस्त्वया ॥ १९ ॥

मुनयः—( श्रुत्वा सहर्षम् ) दिष्ट्या श्रुतं तावदश्रोतव्यम् ।

नारदः—( नभोऽवलोक्य स्वगतम् ) आर्याः ! व्याकुलोऽस्मि । न पश्यामि देवान् ।

मुनयः—( साशङ्कम् ) तात नारद ! निरूपय निरूपय ।

नारदः—( दृग्बाधामभिनयन् ) आर्याः ! किं निरूपयामि ।

कवचितककुभोऽमी श्यामला धूमकूटाः
कनकशिखरिशृङ्गप्रांशुरर्चिःप्रपञ्चः ।
तरुणतरुणगुञ्जापुञ्जपिङ्गाः स्फुलिङ्गाः
किमपि नभसि नान्यत्तुर्यमालोकयामि ॥ २० ॥

मुनयः—( पुरोऽवलोक्य सहर्षम् ) अहह! हर्षव्याकुलोऽसि । किन्न पश्यसि निखिलसुरपरिवारं रथारूढमायान्तं त्रिपुरान्तकम् ? ।

( ततः प्रविशति यथानिर्दिष्टो महेशः )

महेशः—भगवन्सुरज्येष्ठ ! स्थापय रथम् । स्थीयतामिहैव क्वापि मुनि-नारदसनाथे कैलासैकदेशे ।

( ब्रह्मा तथा करोति । नारदाद्याः सप्रश्रयमुपसृत्य प्रणमन्ति )

महेशः—अयि देवाः ! सर्वे रथादवतीर्य यथायथमुपविशत। उपविशन्तु चात्रभवन्तो मुनयः ।

( सर्वे तथा कुर्वन्ति ऋषयः । सहर्षं महेशः सव्रीडमास्ते )

नारदः—( सहर्षम् ) अयि जगन्नाथ ! किं ते देवा उचितं पारितोषिक-मिहाद्भुते कर्मणि कुर्वन्तु ?

उत्कृत्य मौलिकमलैर्नवचन्द्रचूड !
त्वं पूज्यसे यदि किमप्युचितं तथा स्यात् ।
तुभ्यं तदप्यहह ! न स्वदते शिवाय
त्रैलोक्यरक्षणपराय किमत्र कुर्मः ॥ २१ ॥

महेशः—( सव्रीडस्मितम ) अयि नारद !

वैकुण्ठः पद्मजन्मा त्रिदशपरिवृतः पावकः प्रेतनाथो
रक्षो वारामधीशः पवनधनपती सूर्यचन्द्रौ कुमारः ।
धर्मः शेषाद्रिराजावहमपि तरलः षोडशः कौतुकार्थी
मामेवैकं किमित्थं त्रिपुरवधविधौ श्लाघसे नारद ! त्वम् ॥२२॥

इन्द्रः—( सप्रश्रयम् )

व्याप्रियन्ते त्वया स्वैरं निजा अवयवाः सुराः ।
त्वमेकः पूरुषः स्तुत्यः पृथग्गणनयात्र किम् ॥ २३ ॥

महेशः—( स्वगतम् ) अये सङ्कोचयति मामियं व्रीडा । तद्विसर्जयामि निर्जरान् । ( प्रकाशम् ) अयि भगवन्तो गीर्वाणाः ! स्थीयतां यथायथं यथासुखं, समादिशत च किमिदानीं करोमि ।

इन्द्रः—( सप्रश्रयम )

त्रयोऽप्येते त्वया दैत्या दोषा इव निराकृताः ।
अक्षयाणि जगन्त्यासन्प्रार्थ्यते किमिवाधुना ॥ २४ ॥

तथापीदमस्तु—

चूडाचन्द्रावदातेन स्फुरज्ज्वालाक्षिरोचिषा ।
निरस्तमोहतिमिरं त्वयाऽस्तु हृदयं सताम् ॥ २५ ॥

( इति निष्क्रान्ताः सर्वे )

**चतुर्थोऽङ्कः**

इति महाकविवत्सराजविरचितत्रिपुरदाहाभिधानो
डिमः समाप्तः ।

---

महामात्यवत्सराजविरचितरूपकसङ्ग्रहे

# हास्यचूडामणिः प्रहसनम्



कल्याणं वितरन्तु वः पृथुजटाजूटाग्रविस्तारिण-
स्ते चूडाशशिनः शिरःसुरधुनीधारानुकाराः कराः ।
यानुत्प्रेक्ष्य मदोष्मभारविधुरे शुण्डारदण्डं मृषा
हेरम्बे घटयत्यनारतमभूदुल्लासिहासो हरः ॥ १ ॥

अपि च—

भूयिष्ठाः परिरम्भकेलिषु भुजाः सोत्कण्ठमालोकने
नेत्राणि प्रचुराणि चुम्बनविधौ भूयांसि वक्त्राणि ते ।
इत्थं भूरिवधूविलासघटनासज्जस्य काऽहं तव
प्रोक्तः क्रोधविरुद्धयेति शिवया स्मेरो हरः पातु वः ॥ २ ॥

( नान्द्यन्ते )

सूत्रधारः—( नभोऽवलोक्य ) अये विभातैव शर्वरी । ( प्रतीचीमवलोक्य ) अहह ! समय एव सर्वं शोभते । तथाहि—

नवविचकिलमालामांसलैर्यैस्तदानीं
मदनमयमशेषं विश्वमेतद्व्यधायि ।
चरमशिखरिशीर्षे सन्निविष्टास्त एते
दधति पलितभङ्गिं भानवः श्वेतभानोः ॥ ३ ॥

अये ! तन्ममापि जरापराधीनस्य हास्यकर एवायं नाट्याभियोगः ।

( प्रविश्य )

पारिपार्श्वकः—भाव ! हासोय्येव अज्ज रमणिज्जो जं एस नीलकंठजत्तामहूसवसमागदेहिं विअड्ढसामाजिएहिं परिअरिदो राआ परमड्डिएवो अत्तणो अमच्चेण कविणा वच्छराएण विरइदं हासचूडामणिं णाम पहसणं अहिणेदुमादिसदि भवंतं ।

---

१ भाव ! हास एवाद्य रमणीयो यदेष नीलकण्ठयात्रामहोत्सवसमागतैः विदग्धसामाजिकैः परिचरितो राजा परमर्द्दिदेव आत्मनः कविना वत्सराजेन विरचितं हास्यचूडामणिं नाम प्रहसनमभिनेतुमादिशति भवन्तम् ।

सूत्र०—( सहर्षम् ) आः ! सम्यगनुगृहीतोऽस्मि । अयमेव देवो रूपकनिरूपणानैपुणैकपात्रम् । ( साश्चर्यमाधूय शिरः )

गेहेषु प्रसभं सदैव विदुषां सापत्न्यवैरग्रहा-
हासीकर्तुमनारतं वितरणक्रीडाभिरब्धेः सुताम् ।
एष श्रीपरमर्दिदेवनृपतिर्निस्सीमविद्यानिधि-
र्नूनं वागधिदेवता भगवती पुम्भावमभ्यागता ॥ ४ ॥

मार्ष ! तद्गच्छ सज्जीक्रियन्तां कुशीलवाः । पूर्णाः सम्प्रति मे मनोरथाः । यतः—

परिषदियमुदारज्ञानसौजन्यधन्या
रसपरवशवाणीवत्सलो वत्सराजः ।
अयमपि नटवर्गो नाट्यमुद्रापटिष्ठः
फलति सुकृतराशिः प्राक्तनः कोऽप्ययं मे ॥ ५ ॥

( नेपथ्ये गीयते )

पत्तुं णिअसंपत्तिं परिमुसिअं विसमतिमिरचोरेण ।
एसा अंबरलच्छी भअवन्तं सूरमणुसरदि[1] ॥ ६ ॥

सूत्र०—( श्रुत्वा सहर्षम् ) मार्ष ! सज्जा एव कुशीलवाः, यदियं कपटकेलिकुट्टन्याः प्रावेशिकी ध्रुवा गीयते । तदेत्यावामनन्तरकरणीयं सम्पादयावः । ( इति निष्क्रान्तौ )

( प्रस्तावना )

( ततः प्रविशति सुप्तोत्थिता कपटकेलिः )

कपटकेलिः—( विभाव्य ) अहो पच्चूहो संवुत्तो । संचरिदा दाव गवक्खजालन्तरे पुराणसीधुधारासोअरा सूरस्स बालकरा । कधं मह मइरापाणभरालसाए एक्कणिद्दापएव्येव रअणी वोलीणा । ( स्मृतिमभिनीय सहर्षोत्कण्ठम् ) अए पओससमअमइराए महुरत्तणं । ता संपइज्जेव तं आणइस्सं । ण हु अगिहीदमुव्वरदि रमणीयं वत्थु[2] ।

---

१ प्राप्तुं निजसम्पत्तिं परिमुषितं विषमतिमिरचोरेण । एषाऽम्बरलक्ष्मीर्भगवन्तं सूरमनुसरति ।

२ अहो प्रत्यूषः संवृत्तः । सञ्चरिता तावद्गवाक्षजालान्तरे पुराणसीधुधारासोदराः सूर्यस्य बालकराः । कथं मम मदिरापानभरालसाया एकनिद्रापदे एव रजनी व्युत्क्रान्ता । अये प्रदोषसमयमदिराया मधुरत्वम् ! । तत्सम्प्रत्येव तामानेष्ये । न खलु अगृहीतमुद्धरति रमणीयं वस्तु ।

( प्रविश्य )

चेटी—( निःश्वस्य ) अत्तिए ! एवं णेदं । ण हु अगिहीदमुव्वरदि रमणीयं वत्थु । जं तुह चिरआलसंचिदो सो आहरणसंचओ अय्य रअणीए चोरेहिं गहिदो[1] ।

कपटकेलिः—( ससम्भ्रमम् ) कुसुमिए ! किं कधेसि[2] ! ।

कुसुमिका—एवं णेदं[3] ।

कपटकेलिः—( स्वगतं सविषादम् ) कधं विसपरिणदीए परिणदं मइराए जं मुदव्व सुत्तम्हि । ( प्रकाशम् ) ता किं संधी दिण्णो[4] ।

कुसुमिका—ण हु ण हुं[5] ।

कपट०—दुआरमुग्घडिदं[6] ।

कुसु०—ण हु ण हुं[7] ।

कपट०—ता किं नेदं[8] ।

कुसु०—विहावेदु अय्युआ[9] ।

कपट०—( विमृश्य स्वगतम् ) णूणं एदाए मह धूआए तस्सिं कलाकरंड-अजूदअरे अत्थसुण्णेवि अणुरत्ताए एस वावारो भविस्सदि । हद्धी ! हद्धी ! ण हु ण हु अम्हाणं घरे एआरिसी कुलमहिला कावि सुणीअदि जा सव्वंचिअ

---

१ अम्ब ! एवं न्विदम् । न खलु अगृहीतमुद्धरति रमणीयं वस्तु । यत्तव चिरकालसञ्चितः स आभरणसञ्चयो अद्य रजन्यां चोरैर्गृहीतः ।

२ कुसुमिके ! किं कथयसि ? ।

३ एवं न्विदम् ।

४ कथं विषपरिणत्या परिणतं मदिरया, यन्मृतेव सुप्तास्मि । तत्किं सन्धिर्दत्तः ।

५ न खलु न खलु ।

६ द्वारमुद्घटितम् ।

७ न खलु न खलु ।

८ तत्किं न्विदम् ? ।

९ विभावयतु आर्या ।

१० नूनमेतस्या मम दुहितुः तस्मिन् कलाकरण्डद्यूतकरे अर्थशून्येऽपि अनुरक्ताया एष व्यापारो भविष्यति । हा धिक् ! हा धिक् ! न खलु अस्माकं गृहे कुलमहिला कापि श्रूयते, या सर्वथैव

भुअंगे अणुरज्जदि । एदाए चोरिआए एसम्हघरे कलहो विपत्थाविदो । ( प्रकाशम् ) कुसुमिए ! ता कस्स वि नाणिणो मुहेण एदं पयासइस्सं । अत्थि इत्थ जिण्णुज्जाणमढम्मि केवलीनाणनिउणो नाणरासी नाम भअवो । ता पुच्छिदुं गमिस्सं । जग्गवेसु मुग्गरअं जहा एसोवि अणुअरो भोदि ।

कुसु०—मुग्गरअ ! मुग्गरअ ! जग्गेसु जग्गेसु । ( चेटस्तथैव शेते ) बाढं खु दट्ठो एस णिद्दोरईए । नीलकंठो जइ इमं जग्गावेदि[1] ।

कपट०—अहं जाणेमि एदस्स कए कण्णजावं । मोग्गरअ ! मोग्गरअ ! जग्गेसु जग्गेसु । आणेसु तं सुचक्खिदं कडुय मइरं[2] ।

चेटः—कुसुमिए ! गेन्ह गेन्ह भाअणाइं[3] ।

कपट०—वच्छ मुग्गरअ ! अहं तुमं पि दाव गच्छम्ह याव कुसुमिआ भाअणाइं पक्खालिअ आणेदि[4] । ( इति परिक्रामतः )

चेटः—अत्ता किं उण अण्णदो कुदोवि चलिदासिं[5] ।

कपट०—( सविषादम् ) मुग्गरअ ! ण सुदं तए अज्ज अत्तणो घरवुत्तन्तं । तं खु चिरआलसंचिदसव्वस्सं अज्ज चोरेहिं मुसिदं । ता उज्जाणमढवासिणं केवलीनाणणिउणं भअवन्तं नाणरासिं पुच्छिदुं गमिस्सं[6] ।

चेटः—( स्वगतं सहर्षम ) जीवध रे चोरआ ! जीवध ! । सुहपरिणामो भोदु तुम्हाणं एस वावारो । ण क्खु एसा हआसा मुहुत्तमेत्तंपि उवरमदि अम्हारिस-

---

भुजङ्गे अनुरज्यते । एतया चौरिकया एषोऽस्मद्गृहे कलहो विप्रस्तावितः । कुसुमिके ! तत्कस्यापि ज्ञानिनो मुखेनैतत् प्रकाशयिष्ये । अस्ति अत्र जीर्णोद्यानमठे केवलीज्ञान निपुणो ज्ञानराशिर्नाम भगवान् । तत्प्रष्टुं गमिष्यामि । जागरय मुद्गरकं यथा सोऽपि अनुचरो भवति ।

१ मुद्गरक । मुद्गरक ! जागरय जागरय । बाढं खलु एष दष्टो निद्रोरम्या । नीलकण्ठो यदीमं जागरयति ।

२ अहं जानामि एतस्य कृते कर्णजापम् । मुद्गरक ! मुद्गरक ! जागृहि जागृहि । आनय तां स्वास्वादितां कृत्वा मदिराम् ।

३ कुसुमिके ! गृहाण गृहाण भाजनानि ।

४ वत्स मुद्गरक ! अहं त्वमपि तावद्गच्छावः, यावत्कुसुमिका भाजनानि प्रक्षाल्य आनयति ।

५ अम्ब ! किं पुनरन्यतः कुतोऽपि चलितासि ।

६ मुद्गरक ! न श्रुतं त्वया अद्य आत्मनो गृहवृत्तान्तम् । तत्खलु चिरकालसञ्चितसर्वस्वमद्य चौरैः मुषितम् । तदुद्यानमठवासिनं केवलीज्ञाननिपुणं भगवन्तं ज्ञानराशिं प्रष्टुं गमिष्यामि ।

७ जीवत रे चौरका जीवत ! शुभपरिणामो भवतु युष्माकमेष व्यापारः । न खलु एषा

स्स घरअणस्स अणत्थपरंपराओ पत्थावअन्ती । ( प्रकाशं सखेदमिव ) हद्धी हद्धी अत्ता किं एदं संवुत्तं । ण तहा मं बाधेदि अत्थणासो जहा अज्जुआ वि मुसिदत्ति पराहवो । ण हु अग्गी केणवि दद्धो सुणीअदि । अहवा दिव्वा[illegible]गा भणहाणी । णत्थि पराहवो । तहा अ—

जाणंताण समक्खं णाअरलोआण मुसइ सव्वस्सं ।
हेलाए अम्ह अत्ता कह चोरो अत्तिआसरिसो ॥ ८ ॥

कपट०—मोग्गरअ ! सव्वस्स पणासे को एस वक्कक्खरकालो । पदिआरो दाव कीरदु[1] ।

मुद्गरकः—पदिआरं करेमि । ( आकाशे लक्ष्यं बद्ध्वा ) हंहो लोअवाला ण भविस्सध ण भविस्सध जं अत्ताए धम्मपराए परिमुसिदं वत्थु उपेक्खध[2] ।

कपट०—चेडा चेडा ! किं असंबद्धं मन्तेसि[3] ? ।

चेटः—संबद्धं मन्तेमि । दिट्ठिआ एसा माआवंचिदसअलभुअणा अत्ता चोरेहिं परिमुसिदा[4] ।

कपट०—( सक्रोधम् ) मोग्गरअ ! ण संवरसि अत्तणो मिच्चुदुआरं मुहं[5] ।

( इति चपेटेन ताडयति )

चेटः—( सवैलक्ष्यमपसृत्य ) अत्ता संबद्धे असंबद्धे वि कुप्पसि । ण तए सह गमिस्सं[6] ।

---

हताशा मुहूर्तमात्रमपि उपरमति अस्मादृशः गृहजनस्य अनर्थपरम्पराः प्रस्तावयन्ती । हा धिक् हा धिक् अम्ब ! किमेतत् सं[illegible]त्तम् । न तथा मां बाधते अर्थनाशो यथा आर्याऽपि मुषिता इति पराभवः । न खलु अग्निः केनापि दग्धः श्रूयते । अथवा दैवाधीना धनहानिः । नास्ति पराभवः । तथा च—

जानतां समक्षं नागरलोकानां मुष्णाति सर्वस्वम् ।
हेलया अस्माकमम्बा कथय चौरः अम्बासदृशः ॥

१ मुद्गरक ! सर्वस्य प्रणाशे क एष वक्राक्षरकालः । प्रतीकारः क्रियताम् ।

२ प्रतिकारं करोमि । हंहो लोकपाला न भविष्यत न भविष्यत यदम्बाया धर्मपराया वस्तु परिमुषितमुपेक्षध्वम् ।

३ चेट चेट ! किमसंबद्धं मन्त्रयसि ? ।

४ संबद्धं मन्त्रयामि । दिष्ट्या एषा मायावञ्चितसकलभुवना अम्बा चौरैः परिमुषिता ।

५ मुद्गरक ! न संवरसि आत्मनो मृत्युद्वारं मुखम् ।

६ अम्ब ! सम्बद्धे असम्बद्धेऽपि कुप्यसि । न त्वया सह गमिष्यामि ।

कपट०—( सानुकम्पमिव ) मोग्गरअ ! मोग्गरअ ! एहि एहि दाव पाविदे सव्वस्से भूयिट्ठं मइरामहूसवो माणइदव्वो[1] । ( इति हस्ते गृहीत्वा परिक्रामति )

चेटः—( समन्तादवलोक्य ) अहो वसन्तावआरमंडिदस्स ससिरीअत्तणं उज्जाणस्स । अत्ता पेच्छध पेच्छध[2] ।

मत्तो भुअंगोव्व समक्खमेसो जं छप्पओ चुंबइ एक्कमेक्कं ।
तेणव्व एदाओ हसन्ति वल्लीविलासिणीओ कुसुमुक्करेहिं ॥ ९ ॥

अवि अ—

मत्ताओ रोलंबविलासिणीओ गाअन्ति गेअं मअरद्धअस्स ।
तं चेअ चित्ताणिलचालिदाओ णच्चन्ति वल्लीओ लअक्कमेणं[3] ।

कपट०—( निःश्वस्य ) मुग्गरअ ! ण मे दुक्खत्तहिअआए पडिहाइ वसन्तो[4] ।

चेटः—ण केवलं तुज्झ, ( अङ्गुल्या निर्दिशन् ) एदाए वि[5] । तहा अ—

एसा रोलंबसुण्णदाए तुण्हिक्का कुसुमभूसणुम्मुक्का ।
लक्खिज्जइ कुंदलआ मुसिअव्व वसन्तचोरेण ॥ १० ॥

कपट०—मुग्गरअ ! गच्छ दाव णिरूवेहि इमम्मि मढम्मि किं कुणन्तो सो भअओ चिट्ठदि । अहं उण इहय्येव चिट्ठिस्सं[6] ।

१ मुद्गरक मुद्गरक ! एहि एहि तावत्प्रापिते सर्वस्वे भूयिष्ठं मदिरामहोत्सवो मानयितव्यः ।
२ अहो वसन्तावतारमण्डितस्य सश्रीकत्वमुद्यानस्य । अम्ब ! प्रेक्षस्व प्रेक्षस्व ।

मत्तो भुजङ्ग इव समक्षमेष यत् षट्पदश्चुम्बति एकमेकम् ।
तेनेव एता हसन्ति वल्लीविलासिन्यः कुसुमोत्करैः ॥ ९ ॥

३ अपि च—

मत्ता रोलम्बविलासिन्यः गायन्ति गेयं मकरध्वजस्य ।
तत्रैव चित्रानिलचालिता नृत्यन्ति वल्ल्यः लयक्रमेण ॥

४ मुद्गरक ! न मे दुःखार्तहृदयाया प्रतिभाति वसन्तः ।
५ न केवलं तव, अस्या अपि ।
तथा च—

एषा रोलम्बशून्यतया तूष्णीका कुसुमभूषणोन्मुक्ता ।
लक्ष्यते कुन्दलता मुषितेव वसन्तचौरेण ॥

६ मुद्गरक ! गच्छ तावन्निरूपय अस्मिन्मठे किं कुर्वन् स भगवान् तिष्ठति । अहं पुनरिहैव स्थास्ये ।

( चेटस्तथा कृत्वोपगम्य )

चेटः—अत्ता दुवे केवि इध मुंडिदमुंडा वाआकलहं कुणन्ति । जं एक्को भणदि तं अवरोवि तस्स कए पडिभणदि[1] ।

कपट०—मुग्गरअ ! सो भयवो सिस्स अज्झावअन्तो चिट्ठदि । ता इध्य्येव चिट्ठम्ह याव से अज्झअणं समप्पदि[2] । ( इति तथा कुरुतः )

( ततः प्रविशति शिष्यमध्यापयन्भगवान्कौण्डिन्यः )

ज्ञानराशिः—अयि ! कंठगतौ श्लोकौ तवेमौ संवृत्तौ ? ।

शिष्यः—णाणरासे ! उअरगदाविमे संवुत्तौ[3] ।

ज्ञानराशिः—( सक्रोधम् ) मूर्ख ! नामग्रहणेन मां व्याहरसि ।

शिष्यः—किं तुह नामग्गहणेण पावं भोदि[4] ? ।

ज्ञान०—धिङ्मूर्ख ! न गृह्यते गुरूणां नाम ।

शिष्यः—ता कधं सेलाणं णाम गेन्हइ[5] ।

ज्ञान०—विद्यादानादिना गुरवो नतु प्रथीयांसः । उपाध्यायपादा इत्येवाहं त्वया व्याहार्यः ।

शिष्यः—उअज्झाअ ! उअरगदाविमे संवुत्ता ते दुवेवि सिलोआ । सुणादु भवं[6] ।

आलोक्य सर्वगात्राणि विचार्य च पुनः पुनः ।
इदमेकं तु निष्पन्नं ध्येयो नारीजनः सदा ॥ ११ ॥

ज्ञान०—( सक्रोधम् ) धिङ्मूर्ख ! वर्णविपर्ययेण विप्लावितवानसि ।

---

१ अम्ब ! द्वौ कावपि अत्र मुण्डितमुण्डौ वाचाकलहं कुर्वतः । यदेको भणति तदपरोऽपि तस्य कृते प्रतिभणति ।

२ मुद्गरक ! स एव भगवान् शिष्यमध्यापयन् तिष्ठति । तदिहैव तिष्ठावः यावत्सोऽध्ययनं समर्पयति ।

३ ज्ञानराशे ! उदरगताविमौ संवृत्तौ ।

४ किं तव नामग्रहणेन पापं भवति ? ।

५ तत्कथं शैलानां नाम गृह्यते ? ।

६ उपाध्याय ! उदरगताविमौ संवृत्तौ तौ द्वावपि श्लोकौ ।

शिष्यः—उअज्झाअ ! कीस कुप्पसि । जारिसो तए पंडुरवण्णो सिलोओ लिहिदो तारिसो मए पढिदो[1] । ( वृषीतलं दर्शयति )

ज्ञान०—( विहस्य ) मूर्ख ! अक्षराण्यथात्वं कृतं तत्तावद्द्वितीयं पठ ।

शिष्यः— नमस्ते पाण्डुरैकाक्ष ! नमस्ते विश्वतापन ! ।
नमस्तेऽस्तु मृषाकोश महापुरुषकूर्चक ! ॥ १२ ॥

ज्ञान०—( सक्रोधम् ) आः क्षुद्र ! पुष्पपाण्डुराक्षं मामुपहससि ! ।
( इति हन्तुमुपक्रमते )

शिष्यः—( ससम्भ्रममपसृत्य ) कीस मं ताडेसि ? । एदे खु हआसा उअज्झाआ ण सहन्ति अत्तणो समहिअमेहाविसेसं सीसं । ता गमिस्सं दाव[2] ।

ज्ञान०—( स्वगतम् ) मर्मज्ञोऽयम् । सङ्ग्रह एवास्य श्रेयान् । ( प्रकाशम् ) वत्स कौण्डिन्य ! एह्येहि ।

शिष्यः—( सोद्वेगम् ) ण आगमिस्सं । चंडसीलो खु तुमं[3] ।

ज्ञान०—कौण्डिन्य ! अलमुद्वेगेनास्मच्चण्डशीलतायाः । पश्य—

नृपतिरखिललोकान्पालयत्यात्तदण्डः
सुखयति जगदर्कः स्वीकृतोष्णस्वरूपः ।
गुरुरपि कटुचेष्टः शास्ति शास्त्राणि शिष्यं
परिणतिहितभाजां भङ्गिरेवंविधैव ॥ १३ ॥

तदेहि पुनस्त्वां शुद्धमध्यापयामि । ( इति समाश्वास्य पाठयति )

आलोक्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं तु निष्पन्नं ध्येयो नारायणः सदा ॥ १४ ॥
नमस्ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! ।
नमस्तेऽस्तु हृषीकेश ! महापुरुषपूर्वज ! ॥ १५ ॥

( शिष्यस्तथैव पठति )

ज्ञान०—( सक्रोधम् ) मूर्ख ! एवं पठ ।

---

१ उपाध्याय ! किं कुप्यसि ? । यादृशस्त्वया पाण्डुरवर्णो श्लोको लिखितस्तादृशः मया पठितः ।

२ किं मां ताडयसि ? । एते खलु हताशा उपाध्याया न सहन्ते आत्मनः समधिकमेधाविशेषं शिष्यम् । तद्गमिष्यामि तावत् ।

३ न आगमिष्यामि । चण्डशीलः खलु त्वम् ।

शिष्यः—( पुनरशुद्धं पठति सनिर्वेदम् ) उअज्झाअ ! सुट्ठु कडुअक्खरं तुह एदं अज्झअणं । ण अ एदिणा किंपि पावीअदि । ता मं केवलीविज्जं अज्झावेसु, जहा मे जणस्स धणाइं साहीणाइं होन्ति[1] ।

ज्ञान०—( सजुगुप्सम् ) मूर्ख ! धिक् त्वां धिक् त्वाम् । भोगाकाङ्क्षया बाध्यसे । अहो मोहः !

मृगः पाशान्प्रायः परिहरति यत्नेन मृगयोः
प्रमादाद्यानद्धो भवति सहसा शोकविकलः ।
अये मुग्धो लोकः प्रकृतिविषमान्हन्त विषया-
न्स्वयं कण्ठे पाशान्घटयतितरां हृष्यतितराम् ॥ १६ ॥

शिष्यः—अलहन्तो एवं मन्तेसि । ण अ तुमं जाणासि केवलीविज्जं[2] ।

ज्ञान०—मूर्ख ! अहमेव केवलीं जाने किन्तु न शुभावहेत्यवधीरिता । तथाहि—

दिव्ये शुद्धिकृता व्यलीककथनाच्चौरेण तातो हतो
भ्राता मे विननाश कालफणिना दष्टो निधानं खनन् ।
युद्धज्ञानविपर्ययान्नृपतिना हन्तुं समाकाङ्क्षितो
जातोऽहं भगवानियं कुलरिपुर्विद्या हि नः केवली ॥ १७ ॥

शिष्यः—( विहस्य ) जाणिदं दाव तिपौरुसं तुम्हाणं णाणमाहप्पं । जाणावेसु मं तं अत्तणो संबलभूदं रहस्सं[3] ।

ज्ञान०—( सस्मितम् ) मूर्ख ! मुखरोऽसि । नार्हसि केवलीशिष्यत्वम् ।

शिष्यः—( साकूतं विहस्य ) उअज्झाअ ! किं किं मुहरत्तणेण मए तुह पआसिदं[4] ।

ज्ञान०—कौण्डिन्य ! त्वमस्माकमात्मैवासि । तदाकर्णय केवलीविदां प्रथमाचारम् ।

---

१ उपाध्याय ! सुष्ठु कटूक्षरं तवैतदध्ययनम् । न च एतेन किमपि प्राप्यते । तन्मां केवलीविद्यामध्यापय, यथा मे जनस्य धनानि स्वाधीनानि भवन्ति ।

२ अलभमानः एवं मन्त्रयसि न च त्वं जानासि केवलीविद्याम् ।

३ ज्ञातं तावत् त्रिपौरुषं युष्माकं ज्ञानमाहात्म्यम् । तज्ज्ञापय मां तदात्मनो शम्बलभूतं रहस्यम् ।

४ उपाध्याय ! किं किं मुखरत्वेन मया तव प्रकाशितम् ।

किं वाग्भिर्निकषो हि नः फलमिति स्यादूढगर्वग्रहः
प्रश्नेष्वाविलमुत्तरं विरचयेन्न व्याहरेन्निर्णयम् ।
सिद्धं कार्यमवेक्ष्य निश्चितमिदं पूर्वं मयासीदिति
स्फारं स्फारमुदीरयेदुपचरेत्कश्चिन्मृषा साक्षिणम् ॥ १८ ॥

अपि च—

चिन्ताचुम्बितचेतसा न रचितः प्रश्नः प्रशस्तस्त्वया
नूनं सम्यगुपश्रुतिर्न भवता ज्ञाता ग्रहीतुं तदा ।
त्वद्दोषेण फले भ्रमोऽयमभवद्विद्या हि नः केवली
कल्पान्तेऽपि न कम्पते जनमिति प्रत्याययेन्निश्चितम् ॥ १९ ॥

शिष्यः—उअज्झाअ ! फुडं किंपि भोदि[1] ।

ज्ञान०—( नेपथ्याभिमुखमवलोक्य साशङ्कम् ) मूर्ख ! तिष्ठ तिष्ठ एकपुरुषानुचरा महिला काचिदितोऽभिवर्त्तते ।

( ततः प्रविशति कपटकेलिर्मुद्गरकश्च )

मुद्गरकः—अत्ता ! सुट्ठु खु पाणगोट्ठीजोग्गं ठाणं[2] ।

कपट०—( सक्षोभम् ) एहि दाव तुण्हिक्को[3] ।

ज्ञान०—( स्वगतं साशङ्कम् ) न खलु श्रुतमेताभ्यामस्मदीयं वचोरहस्यम् । भवतु प्रगल्भामहे तावत् । ( प्रकाशम् ) कौण्डिन्य !

ब्रह्मेवाहं मरणमथवा जीवितं वेद्मि जन्तोः
स्वामीवाहं परहृतधनं क्ष्मातलादुद्धरामि ।
लोकस्याहं सकलचरितान्यन्तरात्मेव जाने
चौरैर्लुप्तं स्वयमिव धृतं वस्त्वहं प्रापयामि ॥ २० ॥

कपट०—( श्रुत्वा सहर्षम् ) मुग्गरअ ! आअण्णअ आअण्णअ भअवदो वअणामयं । एहि तुरिदम्[4] । ( इत्युपसर्पतः )

कपट०—भअवं ! पणमामि[5] ।

---

१ उपाध्याय ! स्फुटं किमपि भवति ।
२ अम्ब ! सुष्ठु खलु पानगोष्ठीयोग्यं स्थानम् ।
३ एहि तावत्तूष्णीकः ।
४ मुद्गरक ! मुद्गरक ! आकर्णय भगवतो वचनामृतम् । एहि त्वरितम् ।
५ भगवन् प्रणमामि ।

मुद्दरकः—अहंपि पणमामि[1] ।

ज्ञान०—उभयोर्भद्रमस्तु । आस्यताम् ।

( उभावुपविशतः )

कपट०—( सप्रश्रयम् ) भअवं ! अज्ज मे रअणीए मुसिदं सव्वस्सं अप्पावेदु भवं[2] ।

शिष्यः—( ससम्भ्रमम् ) आः ! किं मन्तीअदि । अज्ज रयणीए मढं मोत्तूण ण कहिंपि गदो उअज्झाओ[3] ।

कपट०—( कर्णौ पिधाय ससम्भ्रमम् ) सन्तं पावं । णाणसत्तीए चोरं मुणिऊण अप्पावेदुत्ति मए मंतिदं[4] ।

ज्ञान०—( सस्मितम् ) कौण्डिन्य ! तिष्ठ तिष्ठ । ( कपटकेलिं प्रति ) भद्रे ! अनुचितेयमस्माकमेवंविधा विद्या ।

कपट०—( सप्रश्रयम् ) भअवं करुणारससाअरे तुम्हे मोत्तूण को अन्नो अम्हारिसस्स अत्थीअणस्स सरणं । पत्तो अ सो अत्थसंचओ तुम्हाणं य्येव साहीणो भविस्सदि[5] ।

ज्ञानराशिः—( स्वगतं सहर्षम् ) स्वीकृतस्तावदस्माकमनया मनोरथः । तथापि निरीहतामेवाभिनयामि ।

न जानामि न गृह्णामि मम किं चिन्तयाऽनया ।
अनङ्गीकार एवाऽयं दाम्भिकानां महाफलः ॥ २१ ॥

( प्रकाशम् ) कल्याणि ! त्वदभीष्टेनैव कृतकृत्या वयम् । कौण्डिन्य ! अर्पय केवलीपुस्तकं, करोमि लाभालाभविनिश्चयम् ।

शिष्यः—( पुस्तकमुपनीय ) कीरदु दाव केवलीपुत्थअपूआ[6] ।

---

१ अहमपि प्रणमामि ।

२ भगवन् । अद्य मे रजन्यां मुषितं सर्वस्वमार्पयतु भवान् ।

३ आः किं मन्त्र्यते ! । अद्य रजन्यां मठं मुक्त्वा न कुत्रापि गत उपाध्यायः ।

४ शान्तं पापम् । ज्ञानशक्त्या चोरं ज्ञात्वा आर्पयतु इति मया मन्त्रितम् ।

५ भगवन् ! करुणारससागरान् युष्मान्मुक्त्वा कोऽन्यः अस्मादृशस्य अर्थिजनस्य शरणम् । प्राप्तश्च सोऽर्थसञ्चयो युष्माकमेव स्वाधीनो भविष्यति ।

६ क्रियतां तावत्केवलीपुस्तकपूजा ।

मुद्रक:—( सहसोत्थाय ) आणेमि कुसुमाइं[1] ।

शिष्य:—भद्द ! सुवण्णेहिं रअणेहिं वा केवलीपुत्थअपूआ भोदि[2] ।

( कपटकेलिः ज्ञानराशेर्मुखमीक्षते )

ज्ञान०—( स्वगतं सपरितोषम् ) अर्हति केवलीरहस्यशिष्यत्वं कौण्डिन्यः। ( प्रकाशम् ) भद्रे ! एवमेवैतत् ।

श्रद्धालुरात्मनः कुर्याल्लाभाल्लाभनिरूपणम् ।
अभ्यर्च्य स्वर्णरत्नाभ्यां केवलीं मनुरब्रवीत् ॥ २२ ॥

अभावे कुसुमानि भवन्तु ।

कपट०—अय्य ! मुक्खपक्खो य्येव कीरदु[3] । ( इत्यङ्गुलीयकेन पुस्तकं पूजयति )

ज्ञानः—कौण्डिन्य ! गृहाण । दास्यसि विभज्य भिक्षुभ्यः ।

शिष्य:—( स्वगतम् ) हआस ! जाणेमि तुमं । अहरेहिं भणसि, ण हिअएर्णं । ( प्रकाशम् ) जं उअज्झाओ आणवेदि[4] । ( इत्यङ्गुलीयकं गृह्णाति )

ज्ञान०—( पुस्तकमुद्घाट्य ) अये ! ग्रहकुण्डलीं तावदालिखामि । ( लिखनाभिनयं कृत्वा )

यदि पश्यति रविसूनुर्विंशस्थानस्थितं व्यतीपातम् ।
यदि राहुः शकटभेदी स भवति केतुश्च मेषस्थः ॥ २३ ॥
रविरङ्गारकलग्ने भवति यदा पापवीक्ष्यमाणश्च ।
अर्थशरीराभावं प्रश्ने ब्रूयात्तदा नियतम् ॥ २४ ॥

न चायमिह योगः । तदस्ति तावल्लाभो नष्टस्य वस्तुनः ।

कपट०—( सहर्षम् ) अय्यस्स पसाएर्णं[5] ।

शिष्य:—( सचमत्कारम् ) अहो ! उअज्झाअस्स विज्जामाहप्पं । सअलाओ वि सालिहोत्तगाहाओ कंठे किदाओ[6] ।

---

१ आनयामि कुसुमानि ।
२ भद्र ! सुवर्णैः रत्नैः वा केवलीपुस्तकपूजा भवति ।
३ आर्य ! मुख्यपक्ष एव क्रियताम् ।
४ हताश ! जानामि त्वामधरैर्भणसि न हृदयेन । यदुपाध्याय आज्ञापयति ।
५ आर्यस्य प्रसादेन ।
६ अहो उपाध्यायस्य विद्यामाहात्म्यम् । सकला अपि शालिहोत्रगाथाः कण्ठे कृताः ।

ज्ञान०—कौण्डिन्य ! इतश्चेतो गत्वा त्वमुपश्रुतिमानय ।

शिष्यः—( निष्क्रम्य पुनः प्रविश्य ) खअं जाहि रे चेडा खयं जाहि[१] ।

मुद्गरकः—( ससंरम्भमुत्थाय ) आः ! कीस रे खमणआ ! मं अक्कोससि ?। चिट्ठ चिट्ठ तुहज्येव मुंडेण केवलीपुत्थअपूअं करेमि[२] ।

शिष्यः—( सभयम् ) अब्बह्मण्णं अब्बह्मण्णं । उवस्सुदी खु मए एसा आणीदा । ण हु ण हु तुमं अक्कोसेमि[३] ।

कपट०—मुग्गरआ ! ण संवरसि अत्तणो मिच्चुदुआरं मुहं[४] ।

ज्ञान०—सौम्य ! तिष्ठ तिष्ठ नायमाक्रोशः । उपश्रुतिरियम् । तत्त्वमेवेदानीमुपश्रुतिं गृहीत्वा समागच्छ ।

मुद्गरकः—वंचेसि रे वंचेसि[५] ।

ज्ञान०—( साशङ्कमिव ) आः ! किं प्रलपसि ? ।

मुद्गरकः—अय्य ! एवं मए आअण्णिदं[६] ।

ज्ञान०—( लिखनाभिनयं कृत्वा ) कौण्डिन्य ! कवर्गीयोऽयं वकारः ।

शिष्यः—अहं उण सवग्गीयं जाणेमि[७] ।

ज्ञान०—तदस्य कति मात्राः ? ।

शिष्यः—पञ्च ।

ज्ञान०—अनुस्वारस्य कति भवन्तु ।

शिष्य०—जेत्तीओ लिहिदुं पारेसि[८] ।

---

१ क्षयं याहि रे चेट ! क्षयं याहि ।

२ आः किं रे क्षमणक ! मामाक्रोशसि ? । तिष्ठ तिष्ठ तवैव मुण्डेन केवलीपुस्तकपूजां करोमि ।

३ अब्रह्मण्यमब्रह्मण्यम् । उपश्रुतिः खलु मया एषा आनीता । न खलु न खलु त्वामाक्रोशामि ।

४ मुद्गरक । न संवरसि आत्मनो मृत्युद्वारं मुखम् ।

५ वञ्चयसि रे वञ्चयसि ।

६ आर्य ! एवं मयाऽऽकर्णितम् ।

७ अहं पुनः सवर्गीयं जानामि ।

८ यावत्यः लिखितुं पारयसि ।

ज्ञान०—त्रयोदश तावत्। अथ त्रयोदशभिः पञ्चभिश्च द्वाविंशतिः।

शिष्यः—णहि णहि विंसदी भोदि[1]।

कपट०—णं अट्ठारह होन्ति। विहावेदु अय्यो[2]।

ज्ञानः—( स्वगतं विभाव्य ) अये गणितदुर्विदग्धेयं, तद्यथा तथा तावत्समापयामि। ( प्रकाशम् ) भद्रे ! अन्य एवायमस्मदीयो गणनासम्प्रदायः, तदावेदय तावद्गृहजननामानि।

( मुद्गरकः कपटकेलिमदनसुन्दरीमुद्गरककोकिलपारावतकुमुमिका इत्यादि नामानि लेखयति )

ज्ञान०—( लिखित्वा स्वगतम् ) कपटकेलिः सुष्ठु चौर्येण शङ्कनीयेति प्रथममेवोदाहृता। तदेनामेव कथयामि। ( गणिताभिनयं कृत्वा प्रकाशम् ) कपटकेलिस्तावत्कृतचौर्या प्रतिभासते।

मुद्गरकः—( उच्चैर्विहस्य सहर्षम् ) स्सहु अय्येण जाणिदं। सइं ग्येव एसा मुसदि अम्ह घरं[3]।

( कपटकेलिः सस्मितं काक्षेण वारयति )

ज्ञान०—( विभाव्य स्वगतं सवैलक्ष्यम् ) अनेनान्योन्यहासानुभावेन इयमेव कपटकेलिरिति निश्चीयते। तन्न भद्रमापतितम्। ( विमृश्य स्मृतिमभिनीय )एतस्याः किल सुता गणिका मदनसुन्दरी कलाकरण्डकैकाग्रहृदया। ताविमौ तद्भृत्यौ चौर्यद्यूतकारिणौ कोकिलपारापतौ। तदेवं तावत्। ( प्रकाशं कपटकेलिमाहूयापवार्य ) भद्रे ! निश्चितश्चौरस्त्वन्नामधेयं च संवरणार्थमुदाहृतम्। प्रयातु भवनं भवती। सुनिभृतमेव याचनीयौ कोकिलपारावतौ।

कपट०—( प्रकाशं सहर्षम् ) अणुमण्णदु मं अय्यो[4] !

ज्ञान०—भद्रे ! साधयतु भवती। यतश्च वस्तु लब्धव्यं, न तस्मै रोषायितव्यं।

( कपटकेलिर्मुद्गरकेण सह निष्क्रान्ता )

शिष्यः—( अङ्गुलीयकमुपनीय ) अलंकरेदु अज्जो एदिणा अत्ताणयं[5]।

---

१ नहि नहि विंशतिर्भवति।

२ ननु अष्टादश भवन्ति। विभावयतु आर्यः।

३ साधु आर्येण ज्ञातम्। स्वयमेव एषा मुष्णाति अस्माकं गृहम्।

४ अनुमन्यतां मामार्यः।

५ अलङ्करोतु आर्यः एतेनात्मानम्।

ज्ञान०—( सोद्वेगमिव ) कौण्डिन्य ! कस्तवायं मोहः । पश्य रे पश्य—

जरामृत्युव्याधिव्यसनघटनैकाग्रहृदयो
विपर्यासं यस्याः प्रगुणयति कालः प्रतिकलम् ।
तनौ तस्यामस्यामलमलमलङ्कारघटनं
ज्वलद्वह्नौ गेहे रचयति चतुष्कानि कतमः ॥ २९ ॥

शिष्यः—( विहस्य ) उअज्झाअ ! तुहय्येव अहं सिस्सो । किं मं पच्चाएसि । गेन्ह दाव[1] ।

( ज्ञानराशिरङ्गुलीयकं परिदधाति )

शिष्यः—( साकूतं विहस्य अञ्जलिं बद्ध्वा ) भअवं अंगुलीय ! णमो दे । थिरो होहि इहय्येव उअज्झाअहत्थम्मि[2] ।

ज्ञानः—( सक्रोधमिव ) आः पाप ! असत्प्रलापवाचाल ! विस्मृतान्येव मे व्यसनानि । ( स्मृतिमभिनीय सचमत्कारम् ) कौण्डिन्य ! स्मारितोऽस्मि त्वद्वचनेन कलाकरण्डकद्यूतकारप्रार्थनाम् । स हि द्यूते विध्वस्तसर्वस्वो मदीयमन्त्रप्रभावाद्विजयमाकाङ्क्षति । अस्ति तस्यास्मासु बहुधा प्रत्ययः । तदेहि मन्त्रजपयोग्यं विजनं प्रदेशमाश्रयावः । दुर्वारगणिकादिप्रचारमिदमुद्यानम् ।

शिष्यः—ता इदो इदो एदु उअज्झाओ[3] ।

( इति निष्क्रान्तौ )

प्रथमोऽङ्कः

( ततः प्रविशति मन्त्रजपपरायणो ज्ञानराशिः शिष्यश्च )

शिष्यः—उअज्झाअ ! बहुलो तए कदो मंतजाओ । जाणे जिदंय्येव कलाकरंडअजूदअरेण । ण हु दे विलंबिदपहाओ मन्तो । ता एहि उज्जाणं य्येव गच्छम्ह । डज्झन्ति मे मज्झन्हचंडेण चंडंसुतेएण अंगाइं[4] ।

ज्ञान०—( जपं विहाय ) एवमेवैतत् ।

---

१ उपाध्याय ! तवैवाहं शिष्यः । किं मां प्रत्यायसि । गृहाण तावत् ।

२ भगवन् अङ्गुलीय ! नमस्ते । स्थिरो भव इहैव उपाध्यायहस्ते ।

३ तदितः इत एतु उपाध्यायः ।

४ उपाध्याय ! बहुलस्त्वया कृतो मन्त्रजापः । जाने जितमेव कलाकरण्डकद्यूतकरेण । न खलु ते विलम्बितप्रभावो मन्त्रः । तदेहि उद्यानमेव गच्छावः । दह्यन्ति मे मध्याह्नचण्डेन चण्डांशुतेजसा अङ्गानि ।

मैहिरोऽयं महःपूरः क्रूरः खल इवोत्कटः।
प्रतिकर्तुं परं शक्यः सुस्निग्धैः शाखिसज्जनैः ॥ १ ॥

तदेहि गच्छावः। ( इति निष्क्रामतः )

शिष्यः—एदं उज्जाणं। पविसदु भवं[1]। ( प्रवेशं नाटयतः )

शिष्यः—( कतिचित्पदानि दत्वाऽग्रतोऽवलोक्य ) उअज्झाअ! पेच्छ पेच्छ। इध माधवीमंडवे अब्भुदा कावि इत्थिआ उअज्झाउव्व झाणपराअणा चिट्ठदि। अवरावि एदाए पासम्मि देवआपूअत्थं चन्दणकुसुमाइं उव्वहन्ती चिट्ठदि[2]।

ज्ञान०—कौण्डिन्य! तदिहैव रक्ताशोकतले उपविशावः। किं माधवीमण्डपेन। ( इत्युपविशतः )

शिष्यः—( विभाव्य स्वगतं साश्चर्योपहासम् ) अहो! उअज्झाओ अहो! उअज्झाओ। सुट्ठु खु एसा इहट्ठिदेण पुलोईअदि[3]।

( ततः प्रविशति यथानिर्दिष्टा मदनसुन्दरी चेटी च )

ज्ञान०—( विलोक्य स्वगतम् ) अहो! रूपसम्पदस्याः।

तथाहि—

लावण्यवीचिनिचयैस्तरलायताक्षी
प्रक्षाल्य निष्ठुरविवेकदुरक्षराणि।
कन्दर्पदैवतमियं सहसोपदेश-
माविष्करोति हृदि संयमिनो ममापि ॥ २ ॥

चेटी—भट्टिणि! एदं खु तुह अंगपसंगमलहन्तं पिव पआअइ सिप्पिआसमप्पिदं हरिअंदणं। एसा उण चिरसमागआवि तए असंभाविज्जमाणा उआलंभदिव्व तुमं। परिमलमिलन्तरोलंबणिउरुंबमुहलिदा णोमालिआ। एदं

---

१ एतदुद्यानं प्रविशतु भवान्।

२ उपाध्याय! प्रेक्षस्व प्रेक्षस्व। अत्र माधवीमण्डपे अद्भुता कापि स्त्री उपाध्याय इव ध्यानपरायणातिष्ठति। अपराऽपि एतस्या पार्श्वे देवतापूजार्थं च चन्दनकुसुमानि उद्वहन्ती तिष्ठति।

३ अहो उपाध्यायः अहो उपाध्यायः। सुष्ठु खलु एषा इहस्थितेन प्रलोक्यते।

४ भट्टिनि! एतत्खलु तवाङ्गप्रसङ्गमलभमानमिव प्रतीयते शुक्तिकासमर्पितं हरिचन्दनम्। एषा पुनश्चिरसमागताऽपि त्वया असम्भाव्यमाना उपालभत इव त्वां परिमलमिलद्रोलम्बनिकुरम्बमुखरि-

पि करकमलकलिदं वअणपरिउंबणाविलं व णीसहं पिव किलम्मदि तंबोलं। ता को एस वसंतावआरपहरिसावसरम्मि दे हिअअक्खेओ।

मदनसुन्दरी—( अनाकर्णितकेन दीर्घमुष्णं च निःश्वस्य संस्कृतमाश्रित्य )

भुञ्जानाः सहकारकोरकविषं प्राणन्ति पुष्पन्धयाः
कण्ठः कोकिलयोषितां नभकुहूशब्दाग्निना दह्यते।
श्रीखण्डानिलकालकूटपवनैर्मूर्च्छन्ति नैता लता
धिङ्मृत्योरसमर्थतां स्मरशरैर्विद्धाऽपि जीवाम्यहम् ॥ ३ ॥

ज्ञान०—कौण्डिन्य! किमस्माकमिह निस्सङ्गानाम्?। तदेहि गच्छावः।

कौण्डिन्यः—उअज्झाअ! चिट्ठ चिट्ठ। तुह दुरज्झअणदूमिदा सीअलाअन्ति कण्णा एदाणं महुरालावेहिं[1]।

ज्ञान०—( स्वगतम् ) ममापि। ( प्रकाशम् ) कौण्डिन्य! चित्रकरवेश्यालापलालसो यदध्ययनादुद्विजसे।

( चेटी भट्टिनीत्यादि पुनः पठति। मदनसुन्दरी तथैव चिन्तां नाटयति )

चेटी—( हस्ते गृहीत्वा ) भट्टिणि मअणसुंदरि! किं उण तुमं अमंगलं वाहरसि ण पडिच्छसि णेवच्छलच्छिं?। किं एआरिसय्येव कलाकरंडअं पेच्छिहिसि[2]।

मदन०—( चमत्कृत्य सहर्षम् ) सहि! कहिं सो जूदअरो[3]।

चेटी—भट्टिणि! सो खु णिज्जिदसअलजूदअरदविणो मयणुज्जाणे तए सह पाणगोट्ठीमहूसवं माणइस्सदि। सोवि तए पेसिदो आहरणकरंडओ बारिसोय्येव अत्ताए कवडकेलीए पासं पेसिदोत्ति मह मअणुज्जाणवालेण साहिदं[4]।

ता नवमल्लिका। एतदपि करकमलकलितं वदनपरिचुम्बनाविलमिव निःसहमिव क्लाम्यति ताम्बूलम्। तत्क एष वसन्तावतारप्रहर्षावसरे ते हृदयक्षोभः?

१ उपाध्याय! तिष्ठ तिष्ठ। तव दुरध्ययनदूनौ शीतलायतः कर्णौ एतयोः मधुरालापैः।

२ भट्टिनि मदनसुन्दरि! किं पुनस्त्वमङ्गलं व्याहरसि?, न प्रतीच्छसि नेपथ्यलक्ष्मीम्। किमेतादृश्येव कलाकरण्डकं प्रेक्षिष्यसे?।

३ सखि! कुत्र स द्यूतकरः?।

४ भट्टिनि! स खलु निर्जितसकलद्यूतकरद्रविणो मदनोद्याने त्वया सह पानगोष्ठीमहोत्सवं मानयिष्यति। सोऽपि त्वया प्रेषित आभरणकरण्डकः अम्बायाः कपटकेल्याः पार्श्वे प्रेषित इति मम मदनोद्यानपालेन श्रावितम्।

मदन०—( सोत्कण्ठमुत्थाय ) पिअसहि ! एहि एहि आलिंगसु मं[1] । ( इति चेटीं समालिङ्गति )

शिष्यः—उअज्झाअ ! डज्झउ एस अम्हाणं तओ । पेच्छ पेच्छ एदाए धण्णत्तणं जा मअणसुंदरीए समालिंगिज्जदि[2] ।

ज्ञान०—( स्वगतं सोत्कण्ठम् ) सम्यगाह कौण्डिन्यः । ( प्रकाशं सक्रोधमिव ) रेरे किं प्रलपसि । आः पाप ! शापोदकेन निर्वापयामि त्वद्दुर्विनयपावकम् । ( इति कमण्डलूदकमादातुमिच्छति )

शिष्यः—किं अआरणं कमंडलुजलं पवाहेसि । किलम्मिहसि मज्झण्ह-तण्हाए । जाणेमि तुह पहावं[3] ।

ज्ञान०—मूर्ख ! कपटकेलिधनप्रत्याहृत्तिं बुद्ध्वापि न प्रत्येषि ।

शिष्यः—कवडकेलीए चोरिदत्ति तए पढमंय्येव पच्चाइदोम्हि[4] ।

मदन०—( सौत्सुक्यम् ) ता एहि तहिंय्येव गडुअ पडिवालेम्ह जूद-अरं[5] ।

( इत्युत्थाय चेटीं हस्ते गृहीत्वा परिक्रामति )

शिष्यः—मुंच दाव वाआकलहं । पेच्छ पेच्छ गच्छदि एसा[6] ।

ज्ञान०—( विलोक्य स्वगतं सोत्कण्ठं सानुतापम् ) कथमपक्रामत्येव ! ।

उन्मुच्य दूरमपयाति यथा यथेयं
छायेव मन्मथतरोस्तरलायताक्षी ।
अङ्गानि मे प्रसभमेष तथा तथैव
क्रोडीकरोत्यहह ! दुर्विषहः प्रतापः ॥ ४ ॥

---

१ प्रियसखि ! एहि एहि आलिङ्ग माम् ।

२ उपाध्याय ! दह्यतु एतदस्माकं तपः । प्रेक्षस्व प्रेक्षस्व एतस्या धन्यत्वं यन्मदनसुन्दर्या समालिङ्ग्यते ।

३ किमकारणं कमण्डलुजलं प्रवाहयसि ? । क्लमिष्यसि मध्याह्नतृष्णया, जानामि तव प्रभावम् ।

४ कपटकेल्या चोरितमिति त्वया प्रथममेव प्रत्यायितोऽस्मि ।

५ तदेहि तत्रैव गत्वा प्रतिपालयाम द्यूतकारम् ।

६ मुञ्च तावद्वाचाकलहम् । प्रेक्षस्व प्रेक्षस्व गच्छति एषा ।

शिष्यः—उअज्झाअ ! तुमं व दुव्विसहतिव्वतेओ दिणणाहो । ता एहि एदं ज्जेव माहवीमंडवं पविसम्ह । इहज्जेव झाणधारणादिअं भविस्सदि[1] ।

ज्ञान०—( स्वगतं सहर्षोत्कण्ठम् ) चिरं जीवतु मे वत्सः । कौण्डिन्येन हृद्गतमभिहितम् । ( प्रकाशम् ) यथा रोचते वत्साय । ( उभौ प्रवेशं नाटयतः ) ।

( स्वगतं सोत्कण्ठं विभाव्य ) अये इयं सा वेदिका मदनसुन्दरीपरि[illegible]सम्भाविता । तदेतामधिशये तावत् । ( इति विश्रामं नाटयति )

शिष्यः—इह जहिच्छं कुणदु उअज्झाओ झाणधारणादिअं[2] ।

ज्ञान०—( सान्तस्तापः स्वगतम् ) कुतो ममैतदिदानीम् । तथाहि—

समेधन्ते श्वासाः क नु पवनसंरोधनविधे-
र्वचस्तन्नामैव स्पृशति सततं क्वास्ति स जपः ।
तया ग्रस्तं चित्तं क्वचिदपि ययौ कैटभरिपु-
र्ददौ दीक्षामन्यां मम कुसुमचापोऽथ भगवान् ॥ ५ ॥

प्रगल्भते च ममायं सर्वाङ्गीणः सन्तापस्तदेनामेव शीतलां वेदिकां विलुण्ठनैः सम्भावयामि ( इति तथा करोति )

शिष्यः—( ससम्भ्रममिव ) किं उण उअज्झाओ एवं पलोट्टदि[3] ! ।

ज्ञान०—( ससंवरणम् ) वत्स ! कौण्डिन्य ! बाधन्ते ममाङ्गानि घोरेण ज्वरेण ।

शिष्यः—( स्पर्शमभिनीय ) अहो दे दारुणो जरो । णं जाणसिय्येव जरविआरणमन्तं । ता कीस किलिम्मसि[4] ?

ज्ञान०—( स्वगतं विमृश्य ) अये मदनसुन्दरीविरहज्वरातुरस्य तद्वशीकरणमन्त्रप्रयोग एव मे शरणम् । मुखरशिष्यराक्षसाघ्रातस्य क मे दूत्यादेरभ्युपायस्तदेवं तावत् । ( प्रकाशम् ) वत्स कौण्डिन्य ! । सम्यगनुस्मारितोऽस्मि । तदानय लिखनोपकरणानि, यथा ज्वरजित्वरं मन्त्रबीजं विरचयामि ।

---

१ उपाध्याय ! त्वमिव दुर्विषहतीव्रतेजाः दिननाथः । तदेहि एनमेव माधवीमण्डपं प्रविशावः । इहैव ध्यानधारणादिकं भविष्यति ।

२ इह यथेच्छं करोतु उपाध्यायः ध्यानधारणादिकम् ।

३ किं पुन उपाध्याय एव प्रलुठति ।

४ अहो ते दारुणो ज्वरः । ननु जानास्येव ज्वरवितारणमन्त्रम् । तत्कथं क्लाम्यसि ? ।

शिष्यः—( निष्क्रम्य पुनः प्रविश्य ) एदाइं उवअरणाइं । आलिहदु उअ-ज्झाओ ।

ज्ञान०—( भूर्जत्वचमादाय वशीकरणमन्त्रमालिख्य संवृत्य ) वत्स कौण्डिन्य ! चन्दनपङ्कगोलेन बीजवत्कृत्वैनमानय यथा परिधाय विज्वरो भवामि ।

शिष्यः—( लिखितमादाय परिक्रम्य ) अये पेच्छामि दाव किं इध आलि-हिदं त्ति । ( उन्मोच्य वाचयित्वा सस्मितम् ) अये मन्ताणन्तरं मदनसुंदरी मे वशीभ-वत्विति लिहिदं । ता ण इदं सहिस्सं । अहंपि मअणसुंदरीसमागमासाए जीविदं धारेमि । ता एवं दाव । ( उन्मृज्य कपटकेलिर्मे वशीभवत्विति समालिख्य तथैव संवृत्य चन्दन-पङ्केन बीजवत्कृत्वा पुनः प्रविश्य ) धारेदु एदं उअज्झाओ ।

( ज्ञानराशिः बीजमादाय नाट्येन परिदधाति )

शिष्यः—( सहर्षाश्चर्यमिव ) कधं मुहुत्तमेत्तेय्येव जरविमुक्को व्व उअज्झा-ओ लक्खीअदि[3] ।

ज्ञान०—( स्वगतम् ) बहुधानुभूतसद्यस्कफलोऽयं मन्त्रः । प्रत्यासन्नश्चायं विषविषमशीलः शिष्यः । तदेवं तावत् । ( प्रकाशम ) वत्स कौण्डिन्य ! कृतो मन्त्रप्रयोगः । तदिदानीं ज्वरविजयिनीं भगवतोऽभ्यर्चनां चिकीर्षामि । तदा-नीयन्तां विविधवर्णसौरभ्यवैभवानि कुसुमानि ।

शिष्यः—जं उअज्झाओ आणवेदि । ( इति निष्क्रम्य स्वगतम् ) जाणिदो य्येव मये उअज्झाओ ता किं मे कुसुमेहिं । एदं य्येव चलदलतरुसिहरं आरु-हिअ णिरूपमि सव्वं[4] । ( इति तथा करोति )

ज्ञान०—( पुरोऽवलोक्य सहर्षम् ) अहह ! फलितं मन्त्रप्रभावेन यदियं गृहीतकुसुमताम्बूलादिप्राभृतका कपटकेलिर्मदनसुन्दरीदूत्येऽत्र समागच्छति ।

---

१ एतानि उपकरणानि आलिखतु उपाध्यायः ।

२ अये प्रेक्षे तावत्किमत्रालिखितमिति । अये ! मन्त्रानन्तरं मदनसुन्दरी मे वशीभवत्विति लिखितम् । तन्नेदं सहिष्ये । अहमपि मदनसुन्दरीसमागमाशया जीवितं धारयामि । तदेवं तावत् । धारयतु एतदुपाध्यायः ।

३ कथं मुहूर्तमात्रे एव ज्वरविमुक्त इव उपाध्यायो लक्ष्यते ।

४ यदुपाध्याय आज्ञापयति । ज्ञात एव मया उपाध्यायः । तत्किं मे कुसुमैः । एतदेव चलदल-तरुशिखरमारुह्य निरूपयामि सर्वम् ।

( ततः प्रविशति यथानिर्दिष्टा कपटकेलिः । कपटकेलिः ज्ञानराशेरग्रतः प्राभृतकमुपनीय साकूतं विहस्य सव्रीडमुपविशति )

**ज्ञान०**—( सगर्वहर्षम् ) अयि भद्रे ! अधिगतं तद्वस्तु ? ।

**कपट०**—( सोत्कण्ठम् ) सुहअ ! तं लद्धं गदं वत्थु । हिअअं उण मह तए हरिदं ता तुमं य्येव मह सरणं[1] ।

**ज्ञान०**—( स्वगतम् ) आः किमेतत् ! । किमियं मदिरारसोन्निद्रितस्मरविकारातिशया ? । तत्किमत्रोत्तरं भवति ? अभिमतेन तावद्विनियोजयामि । ( प्रकाशम् ) भद्रे ! अपि कल्याणिनी तव सुता मदनसुन्दरी ।

**कपट०**—( सेर्ष्यम् ) ण हु ण हु सुदा मे, बहिणिआ खु सा । अहं उण तुम्हारिसविलासिजणपसाएण सुहिदा पिहुलत्तणं पत्ता कणिट्ठा वि अण्णारिसी मुणिज्जामि[2] ।

**ज्ञान०**—( स्वगतं सोपहासम् ) अहो ! धार्ष्ट्यं वृद्धायाः । अथवा युज्यत एवैतत् ।

> वातोत्फुल्लतया नयन्ति समतां निम्नौ कपोलौ मुहु-
> स्तुङ्गत्वाभिनयं वहन्ति कुचयोर्वक्षःस्थलोल्लासनैः ।
> पुत्रीभ्योऽपि कनिष्ठतां प्रकटयन्त्याच्छाद्य केशान् सितां-
> स्तारुण्याभिनयग्रहः परिणतौ कोप्येष दुर्योषिताम् ॥ ६ ॥

**कपट०**—( सोत्कण्ठम् ) सुहअ ! मुञ्चसु कसाअंबरं । अलंकरेमि हरिअंदणेण अङ्गाइं[3] ।

**ज्ञान०**—( स्वगतम् ) अहो ! विकारातिशयो वृद्धायाः । अथवा—

> सोत्कण्ठं सेवितोऽत्यर्थं तारुण्यसमये पुरा ।
> जहाति जरतीः कामो न दाक्षिण्यवशादिव ॥ ७ ॥

( प्रकाशम् ) विरम विरम ।

> विविधरसविलासोल्लासिनिःसीमपङ्क-
> प्रचयनियतपातं दूरतस्त्वं नमामि ।

---

१ सुभग ! तल्लब्धं गतं वस्तु, हृदयं पुनर्मम त्वया हृतं, तत्त्वमेव मे शरणम् ।

२ न खलु न खलु सुता मे भगिनिका खलु सा । अहं पुनस्त्वादृशविलासिगणप्रसादेन सुखिता पृथुलत्वं प्राप्ता कनिष्ठाऽपि अन्यादृशी ज्ञाये ।

३ सुभग ! मुञ्च कषायाम्बरम् । अलङ्करोमि हरिचन्दनेनाङ्गानि ।

अहमिह सुखमम्ब ! त्यक्तविभ्रंशशङ्कः
पथि नियमपराणां नीरसे सञ्चरामि ॥ ८ ॥

कपट०—( सोपहासम् ) सुहअ ! णाअरोसि जाणसि परिहसिदुं, जं मं अम्बेत्ति वाहरसि । ण उण जाणसि भाअवदाणं रहस्सं । ण सुदो तए स सिलोओ

भगवान् कुरुते नित्यं यः कन्दर्पनिषेवणम् ।
सुतरां प्रीयते तस्य कन्दर्पजनको हरिः ॥ ९ ॥

ण उण अहं जाणे केत्तीआओ भाअवदाणं विसीओ णिअसुरअसत्थरोसीसअम्मि मये दिण्णाओ[1] ।

ज्ञान०—( सक्रोधम् ) आः पापे ! पतिष्यसि भागवतदर्शनदूषणपङ्केन ।

कपट०—( विहस्य ) सुहअ ! ण णिवडिस्सं । एसो मे आलम्बणमत्थि तुह दंडो[2] । ( इति दण्डं स्पृशति )

ज्ञान०—आः पातकिनि ! मा स्पृश मा स्पृश । त्वयि यमदण्डोऽयं दण्डः ।

( इति दण्डमाच्छिद्य हन्तुमुपक्रमते )

कपट०—( सत्वरमपसृत्य ) रेरे णट्ठभअव ! ण मे एत्थ कोकिलपारावदा तेण मं अणाहं व ताडेसि[3] ।

( ततः प्रविशतः संरब्धौ कोकिलपारावतौ )

पारावतः—कोकिलआ ! कहिंपि इध उज्जाणे सो णट्ठभअवओ पुलोईअदि, जो अम्ह चोरिआकलहमुप्पादेदि[4] ।

ज्ञान०—( पुरोऽवलोक्य सभयम् ) अम्ब ! त्वमेवात्र शरणं मे ।

कपट०—( सक्रोधम् ) अज्जवि मं अंबित्ति वाहरसि[5] ? ।

---

१ सुभग ! नागरोऽसि जानासि परिहसितुं यन्मामम्बेति व्याहरसि । न पुनस्त्वं जानासि भागवतानां रहस्यम् । न श्रुतस्त्वया स श्लोकः । न पुनरहं जाने कियत्यः भागवतानां विशल्यो निजसुरतस्रस्तरोच्छीर्षके मया दत्ता ।

२ सुभग ! न निपतिष्यामि । एष मे आलम्बनमस्ति तव दण्डः ।

३ रेरे नष्टभगवन् ! न मे अत्र कोकिलपारावतौ येन मामनाथामिव ताडयसि ।

४ कोकिलक ! स कुत्रापि इहोद्याने नष्टभगवान् प्रलोक्यते योऽस्माकं चौरिकाकलहमुत्पादयति ।

५ अद्यापि मामम्बेति व्याहरसि ? ।

ज्ञान०—( सप्रश्रयम् ) सुन्दरि ! करिष्यसि मे प्राणरक्षां, त्वदायत्तोऽहम्।

कपट०—ता समाहिदंभेण चिट्ठदु भअवं[1] ।

( ज्ञानराशिः तथा करोति )

कोकिलः—(पुरो निरूप्य सहर्षम् ) पारावआ ! पेच्छ पेच्छ एसो सो भवओ पासट्ठिदाए अत्ताए उआसिज्जमाणो चिट्ठदि । ता एहि उअसप्पम्ह[2] ।

उभौ—( उपसृत्य ससंरम्भमुच्चैःकारम् ) अत्ते ! किं इध तुमं[3] ? ।

कपट०—( सनिभृतस्वरं हस्तसंज्ञया वारयन्ती ) कोकिलआ ! णिहुअं चिट्ठध। मा भोदु समाहिभंगो भअवदो[4] ।

कोकिलः—अत्ते ! एसो खु मे तिव्वमइरावेअविहलोव्व पडिहाअदि जं णिमीलिअच्छो घुम्मदि । ( पारावतं काक्षेण वीक्ष्य ) तुमं वा कधं मन्नेसि[5] ।

पारावतः—कोकिलआ ! एवं ण्णेदं । ता एहि एसो दीहिआजलम्मि मज्जीअदि[6] ( इति तथोपक्रमेते )

कपट०—( ससम्भ्रमम् ) आः किं एदं ! चिट्ठध चिट्ठध रे चिट्ठध । मा जलणम्मि झंपध[7] ।

कोकिलः—अत्ते ! जइ एसो जलणो ता किन्न एदं णिच्चं चिअ उ[illegible]अन्ती डज्झसि तुमं[8] । ( इति प्रसभं धारयतः )

( ज्ञानराशिः सहुङ्कारं शिरो वलयति )

पारावतः—कोकिलआ ! पिच्छिलवालो ण एस धरिदुं पारीअदि[9] ।

---

१ तत्समाधिदम्भेन तिष्ठतु भगवान् ।

२ पारावत ! प्रेक्षस्व प्रेक्षस्व एष स भगवान् पार्श्वस्थितया अम्बया उपास्यमानस्तिष्ठति । तदेहि उपसर्पावः ।

३ अम्ब ! किमत्र त्वम् ? ।

४ कोकिलक ! निभृतं तिष्ठत । मा भवतु समाधिभङ्गः भगवतः ।

५ अम्ब ! एष खलु मे मदिरावेगविह्वल इव प्रतिभाति यन्निमीलिताक्षो घूर्णते । त्वं वा कथं मन्यसे ? ।

६ कोकिलक ! एवं न्विदम् । तदेहि एष दीर्घिकाजले मज्ज्यते ।

७ आः ! किमेतत् ? । तिष्ठत तिष्ठत रे तिष्ठत । मा ज्वलने झम्पत ।

८ अम्ब ! यदि एष ज्वलनस्तत्किं नैतं नित्यमेवोत्सङ्गयन्ती दह्यसे त्वम् ? ।

९ कोकिलक ! पिच्छिलवालो न एष धर्तुं पार्यते ।

**कोकिलः**—पारावआ ! तुमं हत्थेसु अहं पाएसु धारेमि[1] । (इति तथा कुरुतः)

**पारावतः**—(बाहुतो बीजं छित्वा हस्ते गृह्णन्नङ्गुलीयकं प्रत्यभिज्ञाय) कोकिलआ! पच्चभिजाणेसु अंगुलीअअं एदं अत्ताए मअणसत्थसिक्खादक्खिणाए एअस्स विइण्णं[2] ।

**कोकिलः**—(सोपहासम्) साहु अत्ते ! साहु । सव्वस्सं एअस्स समप्पेदि। चोरिआकलंकं उण अम्ह मत्थे आरोवेदि[3]। (उभौ चालयतः)

**ज्ञान॰**—(साक्रन्दम्) कौण्डिन्य ! कौण्डिन्य ! क्वासि ? क्वासि ?। एष त्वामपहाय वैष्णवं लोकमभिपद्ये ।

**कोकिलः**—पाआलमूलत्ति भणे[4] ।

**पारावतः**—कोकिलआ ! एसो भअवओ एदस्सिं च्चेव पच्चासण्णे विन्हुदैवदे चलदलतरुम्मि अवलंबीअदि । अणुभवदु मुहुत्तं खेअरसिद्धिं[5] ।

(कोकिलः ऊर्ध्वं शाखामवलोकते)

**कौण्डिन्यः**—(स्वगतं सभयम्) एसो सो पलिज्जमाणो डरन्तो अवरंपि पज्जालेदि । ता एवं दाव (प्रकाशम्) जीवध जीवध । धारेध धारेध एदं दंभतापसं याव अहं अवदरामि । एसो खु मे सअलुज्जाणे कुसुमाइं णिच्चंचिअ गेन्हइ । अहं इहट्ठिदो णिरूवेमि ण उण पेक्खामि[6] (इत्यवतरणं नाटयित्वा हन्तुमुपक्रमते)

**ज्ञान॰**—अहो गुरौ भक्त्यतिशयः । भवतु । जीवतु तावन्नराकः ।

---

१ पारावत ! त्वं हस्तयोः अहं पादयोर्धारयामि ।

२ कोकिलक ! प्रत्यभिजानीहि अङ्गुलीयकमेतदम्बया मदनशास्त्रशिक्षादक्षिणया एतस्य वितीर्णम् ।

३ साधु अम्ब ! साधु सर्वस्वमेतस्य समर्पयति । चौरिकाकलङ्कं पुनरस्माकं मस्तके आरोपयति ।

४ पातालमूले इति भण ।

५ कोकिलक ! एष भगवान् एतस्मिन्नेव प्रत्यासन्ने विष्णुदैवते चलदलतरौ अवलम्ब्यते । अनुभवतु मुहूर्तं खेचरसिद्धिम् ।

६ एष स प्रज्वाल्यमानो बिभ्यन् अपरमपि प्रज्वालयति । तदेवं तावत् । जीवत जीवत धारयत धारयत एनं दम्भतापसं यावदहमवतरामि । एष खलु मे सकलोद्याने कुसुमानि नित्यमेव गृह्णाति । अहमिहस्थितो निरूपयामि न पुनः प्रेक्षे ।

( कपटकेलिः विहस्य ज्ञानराशेर्मुखमीक्षते )

पारावतः—अरेरे तुमं उज्झाणवालो[1] ?।

कौण्डिन्यः—अध इं[2] ?।

कोकिलः—पारावआ ! जं अत्ता णिहुअं हसिऊण भअवदो मुहं पेक्खदि, ता एसोच्येव सो एदस्स दुदीओ कोंडिण्णो[3]। ( इति सहसोपसृत्य तमपि धारयति )

पारावतः—एसो वि एदस्स भअवओ। इध ता समअं चिअ दोन्हवि भोदु सिद्धी[4]।

( इति योगपट्टाभ्यां द्वयोरपि कण्ठौ संदानयतः )

कौण्डिन्यः—( साक्रन्दं दीर्घं निःश्वस्य ) णिअणिअट्ठाणेसु चिट्ठन्तु णिहाणाइं। किलिम्मदु दालिद्ददूमिओ लोओ। उवरमदि णाणरासी[5]।

कोकिलः—( सस्पृहम् ) रेरे जाणादि तुह उअज्झाओ णिहाणाइं[6] ?।

कौण्डिन्यः—को न एत्थ एदिणा कअत्थीकदो[7] ?।

कोकिलः—( सहसोपसृत्य ) भअवं णाणरासे ! अनुगेन्हसु अम्हे[8]।

ज्ञान०—( स्वगतम् ) साधु कौण्डिन्य ! साधु ! तदेवं तावत्। ( प्रकाशम् ) वत्स ! आर्त्तोऽयं प्रलपति। क्रियतामस्मासु समीहितम्।

( कोकिलपारावतौ योगपट्टौ विहाय पदयोः प्रणिपत्य )

उभौ—पसीददु पसीददु अय्यो। करेसु अम्हे अदलिद्दे[9]।

ज्ञान०—वत्सौ ! क्षान्तं मया। क्षमाधना हि मादृशाः। परोपकार ए-

---

१ अरेरे त्वमुद्यानपालः ?।

२ अथ किम् ?।

३ पारावत ! यदम्बा निभृतं हसित्वा भगवतो मुखं प्रेक्षते, तदेष एव स एतस्य द्वितीयः कौण्डिन्यः।

४ एषोऽपि एतस्य भगवतः अत्र तत्सममेव द्वयोरपि भवतु सिद्धिः।

५ निजनिजस्थानेषु तिष्ठन्तु निधानानि। क्लाम्यतु दारिद्र्यदूनो लोकः। उपरमति ज्ञानराशिः

६ रे रे जानाति तव उपाध्यायो निधानानि ?।

७ को नात्र एतेन कृतार्थीकृतः।

८ भगवन् ज्ञानराशे ! अनुगृहाणास्मान्।

९ प्रसीदतु प्रसीदतु आर्यः। कुरु अस्मानदरिद्रान्।

वास्माकं परमकारुणिकानां परमो धर्मः। अवश्यमनुग्रहीतव्यौ वत्सौ। तदुत्तिष्ठताम्।

उभौ—( उत्थाय ) जीवदु जीवदु अज्जो[1]।

ज्ञान०—( सगर्वम् )

मद्भूभङ्गिसमादिष्टा कुम्भदासीव भूरियम्।
निधानकुम्भसम्भारं गेहे कस्य न ढौकयेत्॥ १०॥

कौण्डिन्य! समानय लाङ्गलीरसम्।

कौण्डिन्यः—किं तेण[2]?।

ज्ञान०—किं न श्रुतं त्वया?—

रसेन लाङ्गलीयेन समन्त्रेणाञ्जितेक्षणः।
निधनं वा निधानं वा धीरः समधिगच्छति॥ ११॥

कोकिलः—भअवं! णिहाणदो किं णिहणं गरुअं[3]?।

ज्ञान०—मात्राहीनमपि सर्वदुःखप्रशमनं निधानान्निधनं श्रेयः।

कोकिलः—ता अम्हाणं तंय्येव भोदु[4]।

ज्ञान०—अथ किं?। त्वरय कौण्डिन्य! त्वरय।

कौण्डिन्यः—जं आणवेदि भवं।( इति निष्क्रम्य पुनः प्रविश्य ) एदं तं गेन्हदु उअज्झाओ[5]।

ज्ञान०—( आदाय ) कस्याक्ष्णोः प्रथमं दीयतामञ्जनम्?।

कोकिलः—मह दाव[6]।

पारावतः—( उपसृत्य ) मह दाव[7]।

---

१ जीवतु जीवतु आर्यः।
२ किं तेन?।
३ भगवन्! निधानतः किं निधनं गुरु?।
४ तदस्माकं तदेव भवतु।
५ यदाज्ञापयति भवान्। एतत्तद्गृह्णातु उपाध्यायः।
६ मम तावत्।
७ मम तावत्।

कपट०—भअवं ! एसोवि तए अणुअंपणिज्जो इत्थीअणो[1]।

ज्ञान०—आः ! किमौत्सुक्येन ?। सर्वेषामेवासन्नं निधनम्।

पारा०—तत्कोकिलस्य तावत्कुरु।

ज्ञान०—( तथा कृत्वा ) वत्स ! एतस्मिन्वृक्षमूले दृशं निधेहि।

( कोकिलः तथा करोति )

पारा०—कोकिलआ ! पेच्छसि किंपि[2] ?।

कोकिलः—ण किम्पि[3]।

ज्ञान०—( अपवार्य ) वत्स पारावत ! सत्येयं जनोक्तिः " अर्थातुराणां न सुहृन्न बन्धुः " यदयं पश्यन्नपि न कथयति। सर्वत्र पदे पदे निधानानीति किमुन्मत्तजल्पितम् ?। तत्तवान्यदेव दर्शयामि।

( इति पारावताक्षिणी तथा करोति )

कपट०—भअवं ! ममावि[4]। ( ज्ञानराशिस्तथा करोति )

कोकिलः—( अपवार्य ) पारावआ ! पेच्छसि किम्पि[5] ?।

पारा०—ण किम्पि[6]।

कोकिलः—अत्ते ! तुमं पेच्छसि किंपि[7]।

कपट०—णहि णहि फुट्टन्ति णवरि लोअणा[8]।

कोकिलः—( अपवार्य ) पारावआ ! अत्ता ण पेच्छदि। तुमं ण पेच्छसि। अहं ण पेच्छामि। ता किं एत्थ काअव्वं। ( अपवार्य मन्त्रयित्वा ) ता एवं दाव ( प्रकाशं )।

---

१ भगवन् ! एषोऽपि त्वया अनुकम्पनीयः स्त्रीजनः।
२ कोकिलक प्रेक्षसे किमपि ?
३ न किमपि।
४ भगवन् ! ममापि।
५ पारावत ! प्रेक्षसे किमपि ?।
६ न किमपि।
७ अम्ब ! त्वं प्रेक्षसे किमपि ?।
८ नहि नहि स्फुटतः। नवरं लोचने।

उअज्झाअ ! थोअं खु अंजणं । ता अवरेण रसेण तुमं मह कणिट्ठो उण पारावअस्स अंजदु लोअणे जह्मा समअंचिअ णिहाणे पेच्छम्ह[1] ।

( उभौ तथा कुरुत: । कौकिलपारावतौ गाढं निपीड्योभयोरप्यक्षिणी निजाक्षिभ्यां सान्द्रं विमर्दयत: )

ज्ञानराशिकौण्डिन्यौ—(पीडामभिनीय) कृष्ण कृष्ण ! स्फुटतो विलोचने ।

कोकिलपारावतौ—हआसा ! गेन्हध गेन्हध णिहणं[2] ।

ज्ञान०—आ: कौण्डिन्य ! उपविषं किमप्येतदानीतं त्वया ! । अन्य एव स नेत्राञ्जनः ।

कौण्डिन्यः—उअज्झाअ ! किं मं मारेदुमिच्छसि । एवं य्येव फुट्टलोअणो मुदोहं[3] ।

पारा०—( पीडातिशयमभिनीय ) हद्धी हद्धी अट्ठाणे मुदोम्हि[4] ।

कोकिलः—पारावआ ! किं सोएसि । तहा अ[5]—

अपीअपुव्वं किमु किंपि मज्जं
विट्टालिदा किं महिला ण कावि ।
जूएण सुण्णो दिअहो गदो किं
को अम्ह सोआवसरो जअम्मि ॥ १२ ॥

ज्ञान०—( स्वगतं सोपहासम् ) सत्यमेतत् ।

कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ।

( प्रकाशम् ) वत्सौ कोकिलपारावतौ ! अस्ति क्वापीह प्रत्यासन्नो जलाशयः । नयनप्रक्षालनमात्रेणेव प्रशाम्यत्येषोऽपमृत्युः ।

---

१ पारावत ! अम्बा न प्रेक्षते । त्वं न प्रेक्षसे । अहं न पेक्षे । तत्किमत्र कर्तव्यम् ? । तदेवं तावत् । उपाध्याय ! स्तोकं खलु अञ्जनम् । तदपरेण रसेन त्वं मम कनिष्ठः पुनः पारावतस्य अञ्जतु लोचने, यथा सममेव निधाने प्रेक्षामहे ।

२ हताशा ! गृह्णीत गृह्णीत निधानम् ।

३ उपाध्याय ! किं मां मारयितुमिच्छसि । एवमेव स्फुटितलोचनो मृतोऽहम् ।

४ हा धिक् हा धिक् अस्थाने मृतोऽस्मि ।

५ पारावत किं शोचसे ? । तथाच

अपीतपूर्वं किमु किमपि मद्यं विट्टालिता किं महिला न कापि ।
द्यूतेन शून्यः दिवसो गतः किं कोऽस्माकं शोकावसरः जगति ॥

कोकिलः—अत्थि[1] एत्थ पच्चासन्नं मअणुज्जाणं, जहिं सामी कलाकरंड-ओ पाणगोट्ठीविलासं करेदि।

पारा०—ता कधं मग्गं पुलोअम्ह[2]।

कोकिलः—एध दाव रिंगन्ता वि गच्छम्ह[3]।

(सर्वे शनैः परिक्रामन्ति। कौण्डिन्यः कोकिलोपरि पतनं नाटयति)

कोकिलः—(सक्रोधं चरणेन प्रेर्य) हआस! किं इध णिहाणं? कोइलो खु अहं। ता परदो गच्छ[4]।

कपट०—(पतनं नाटयन्ती) वच्छ कोकिलआ! अवलंबसु अवलंबसु मं[5]।

कोकिलः—अत्ते! णिवडिदय्येव चिट्ठ। को तुमं उद्धरिदुं पारेदि। हत्थिपडणं तुह संवुत्तं[6]।

(कपटकेलिः कथञ्चिदुत्थाय पुनः पुनः पतनं नाटयति)

पारा०—(सोपहासम्) पावेदु दाव अज्जआ पए पए णिहाणाइं[7]।

कोकिलः—(पीडातिशयं नाटयन्) हद्धी हद्धी एसो णवरि अणुसओ जं ण पाविदो मरणसमअम्मि पाअफंसो पहुणो कलाकरंडअस्स[8]।

कपट०—(साक्रन्दं सोरस्ताडमाकाशे लक्ष्यं बद्ध्वा) पुत्ति मअणसुंदरि! कहिंसि कहिंसि?। देहि मे पडिवअणं। एसा खु अणाहा अद्दिट्ठतुहमुहअंदा विवज्जामि[9]।

(ततः प्रविशति सपरिवारा सम्भ्रान्ता मदनसुन्दरी कलाकरण्डकश्च)

---

१ अस्ति अत्र प्रत्यासन्नं मदनोद्यानं, यत्र स्वामी कलाकरण्डकः पानगोष्ठीविलासं करोति।

२ न कथं मार्गं प्रलोकयामः।

३ एत तावद्रिङ्गन्तावपि गच्छावः।

४ हताश! किमत्र निधानम्?। कोकिलः खल्वहं, तत्परतो गच्छ।

५ वत्स कोकिलक! अवलम्बस्व अवलम्बस्व माम्।

६ अम्ब! निपतितैव तिष्ठ। कस्त्वामुद्धर्तुं पारयति?। हस्तिपतनं तव संवृत्तम्।

७ प्राप्नोतु तावदार्या पदे पदे निधानानि।

८ हा धिक् हा धिक् एष नवरमनुशयो यन्न प्राप्तः मरणसमये पादस्पर्शः प्रभोः कला-करण्डकस्य।

९ पुत्रि मदनसुन्दरि कुत्रासि कुत्रासि? देहि मे प्रतिवचनम्। एषा खलु अनाथा अदृष्ट-त्वन्मुखचन्द्रा विपद्ये।

मदनसुन्दरी—अत्ते! किं नेदं[1] ?।

( कपटकेलिः कण्ठे गृहीत्वा रोदिति )

कलाकरण्डकः—(विलोक्य ससम्भ्रममुपसृत्य) भगवन् ज्ञानराशे ! किमेतत् ?।

ज्ञान०—( स्वरेण ज्ञात्वा ) वत्स कलाकरण्डक ! दुर्दैवहतोऽहं, किं कथयामि।

कोकिलपारावतौ—( सक्रोधम् ) णाह कलाकरंडअ! । एदं माआवंचिदसअलभुअणं संभावेसु णट्ठं[2] ।

कलाकरण्डकः—( ससम्भ्रमम् ) आः पापौ ! अलमलं चापलेन । ( ज्ञानराशिं प्रति ) भगवन् ! कथय किमेतत् । सज्जोऽयं त्वत्प्रेष्यो जनः ।

ज्ञान०—वत्स ! तावदम्भः समानीय प्रक्षाल्यन्तां सर्वेषामक्षीणि ।

कलाकरण्डकः—कुसुमिके ! मुद्गरक ! ननु प्रत्यासन्नैव दीर्घिका, तदानीयतां पानीयम् ।

उभौ—जं सामी समादिसदि। ( इति निष्क्रम्य पुनः प्रविश्य ) उवणीदं जलं[3] ।

कलाकरण्डकः—प्रक्षाल्यन्तां सर्वेषामक्षीणि । ( इति तथा कुरुतः )

ज्ञान०—( मुखं प्रक्षाल्य उन्मील्य चक्षुषी ) वत्स कलाकरण्डक ! दिष्ट्या दृष्टोऽसि दिष्ट्या प्रशान्तमापदा ।

कपट०—( सहर्षम् ) दिट्ठिआ दिट्ठो मए तुह मुहससी[4] । ( इति मदनसुन्दरीं चुम्बति )।

कोकिलपारावतौ—( कलाकरण्डकं पदयोर्गृहीत्वा ) दिष्ट्या जीवतोर्नौ नयनातिथिर्जातोऽसि ।

कलाकरण्डकः—वत्सौ ! प्रणम्यतां तावदयं जगद्गुरुर्भगवान् ।

---

१ अम्ब ! किन्विदम् ? ।

२ नाथ कलाकरण्डक ! एनं मायावञ्चितसकलभुवनं संभावय नष्टम् ।

३ यत्स्वामी समादिशति । उपनीतं जलम् ।

४ दिष्ट्या दृष्टो मया तव मुखशशी ।

( उभौ तथा कुरुतः )

ज्ञान०—सह कलाकरण्डकेन प्रमोदन्तां प्रमोदन्तां भवन्तः सर्वेऽपि। वत्स कलाकरण्डक ! न कश्चिदिहापराध्यति । अनयोर्निधानदर्शनोन्मुख गर्धं यन्नयनाञ्जनं समानीतं तद्भ्रमेणान्यदेव तीव्रं किमपि संवृत्तम् ।

कलाकरण्डकः—( सप्रश्रयम् ) किमुच्यते ? । न खलु प्रमादतोऽपि परिभवन्ति विपदो जगद्गुरूम् ।

ज्ञान०—वत्स कलाकरण्डक ! अपि निर्जिता द्यूतकाराः। पूर्णास्ते मनोरथाः ।

कलाकरण्डकः—( सहर्षं सप्रश्रयम् ) भगवन् ! किमुच्यते ? । नास्त्यसाध्यं किमपि मे भुवने भवदनुकम्पासनाथस्य ।

मुद्गरकः—( सहर्षौत्सुक्यम् ) णाह[1] कलाकरण्डअ ! एसा दे अत्ता एस दे गुरू एस दे परिअणो जं णिरावदो जाओ । ता एध मह्सवं माणेम्ह ।

ज्ञान०—वत्स ! कलाकरण्डक ! ब्रूहि किं ते भूयः प्रियमुपकरोमि? ।

कलाकरण्डकः—( सहर्षं सप्रश्रयम् )

अजय्यास्ते द्यूते सकलकितवाः किन्न विजिताः
प्रिया प्राणप्राया किमु न घटिता चन्द्रवदना ।
विपद्वार्द्धेः पारं किमु मम न यातः परिजनः
कृतार्थं कृत्वा मां किमसि भगवन् ! दित्सुरपरम् ॥ १३ ॥

तथापीदमस्तु—

अवनिमवनिपालाः पालयन्तु प्रकामं
विदधतु शुभवृष्टिं दत्तमोदाः पयोदाः ।
भवतु भवतु लोकः शोकवैदेशिकात्मा
रजनिरमणलेखाशेखरध्यानधन्यः ॥ १४ ॥

कृतिरियं महाराजश्रीपरमर्दिदेवस्यामात्यस्य महाकवेः श्रीवत्सराजस्य ।
हास्यचूडामणिनामकं प्रहसनं समाप्तम् ।

---

१ नाथ कलाकरण्डक ! एषा ते अम्बा एष ते गुरुः एष ते परिजनो यन्निरापदो जातः। तदेत महोत्सवं मानयामः ।

# समुद्रमथनाभिधानः समवकारः

गङ्गाधरो रुचिरशीतकराभिरामो
भालाक्षिवह्निनिभसम्भृतवाडवाग्निः ।
बिभ्रद्विषं सुविषमं गुणरत्नरम्यो
भर्गः समुद्र इव वर्द्धयतु श्रियं वः ॥ १ ॥

अपि च ।

ताः पान्तु वः शिखरदन्तुरमन्दराद्रि-
व्यालोडनव्यतिकराङ्गमयोऽम्बुराशेः ।
यद्वेगविक्लवतया गलितापवादं
श्रीर्निर्भरं मधुरिपोः परिरम्भमाप ॥ २ ॥

( नान्द्यन्ते सूत्रधारः )

सूत्रधारः—( प्राचीमवलोक्य सहर्षम् ) अये प्रागल्भ्यमाससाद प्रत्यूषसमयः। तथाहि—

अभ्युत्थिता परिलसत्कमलाकराब्धे-
र्लक्ष्मीः सहस्रकरमण्डलमभ्युपैति ।
तन्मध्यवर्त्तिमुरवैरिमुखारविन्द-
सन्दर्शनोत्सवसमुत्सुकतां गतेव ॥ ३ ॥

ब्राह्म एव मुहूर्त्ते चाहं विबुद्धः। न च मया किञ्चिदात्महितं विचिन्तितम्। श्रूयते हि स्मार्त्तेभ्यो " ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितम् " इति। तदिदानीमपि चिन्तयामि। ( नेपथ्याभिमुखमवलोक्य ) क इहास्मदीयः ?।

( प्रविश्य )

स्थापकः—( सप्रश्रयम् ) अहमस्मि। समादिशतु मां भावः।

सूत्र०—( सहर्षम् ) दिष्ट्या सम्प्राप्तोऽसि। त्वमेव नः परमो हितस्तद्वि-मृश्यतां, द्वादशापि भ्रातरः कथमिव वयं युगपत्कृतकृत्या भवामः।

स्थापकः—( सहर्षं शिरोऽवधूय ) अहो भावस्य सौभ्रात्रम्। दुष्प्रापश्चैष मनोरथो भावस्य भाग्यसम्पदैव समासाद्यते। आदित्या अपि द्वादश पर्या-

यन एव द्वादशमासेषु परमैश्वर्यभाजनं भवन्ति। तद्विमृश्य विज्ञपयामि (क्षणं विचिन्त्य सहर्षम्)

युष्माभिर्यौगपद्येन सर्वकामार्थसिद्धये।
परमर्दिनरेन्द्रो वा समुद्रो वा निषेव्यताम् ॥ ४ ॥

सूत्र०—(सहर्षम्) साधु दृष्टं साधु स्मारितम्। कविवत्सराजविरचित-समुद्रमथनसमवकाराभिनयेन नः परमर्दिदेव एव पूरिताशेषमनोरथः समुद्रो भविष्यति।

(नेपथ्ये)

एवन्नेदं। समुद्दादो य्येव सव्वे मणोरहा णिव्वहन्ति।

सूत्र०—(स्वरप्रत्यभिज्ञानमभिनीय) अये! पद्मकोऽयं देव्याः समुद्रदुहितु-र्विश्रम्भभूमिर्व्याहरति। तदेह्यावामनन्तरकरणीयं सम्पादयावः (इति निष्क्रान्तौ)

(प्रस्तावना)

(ततः प्रविशति पद्मकः)

पद्मकः—एवं नेदं। समुद्दादोय्येव सव्वे मणोरहा णिव्वहन्ति। कथिदं खु मे गंगादेवीए जहा किर सव्वे सुरा असुरा अ विविहलाहसमूसुआ महु-महपमहणाहबम्भेहिं सह मंतिऊण मंदरमंथाणेण जलहिमहणकअणिच्छआ संवुत्ता। ता तत्थ फलिस्सदि लच्छीए महुमहम्मि पेम्मकप्पलआ गए वि विन्हुपदीए दंसिदा विन्हुणो आलिहिअ लच्छी। सुट्ठु उक्कंठिदो वैउंठो। ता महणाणत्थेवि अत्थि एसो अत्थो जं लच्छीए फलिस्सदि मणोरहो। एसा खु भअवदी गंगादेवी समुद्दवल्लहा पावणाणं शिरोमणी संभुसीसम्मि विन्हुपअम्मि माहप्पेण विहिहरूवा सव्वत्त चिट्ठदि। (सखेदम) कह उण लच्छीए ता जीव-

१ एवं न्विदम्। समुद्रादेव सर्वे मनोरथाः निर्वहन्ति।

२ समुद्रादेव सर्वे मनोरथाः निर्वहन्ति। कथापितं खलु मे गङ्गादेव्या यथा किल सर्वे सुरा असुरा अपि विविहलाभसमूत्सुका मधुमथनप्रमथनाथब्रह्मभिः सह मन्त्रयित्वा मन्दरमन्थानेन जलधिमथनकृतनिश्चयाः संवृत्ताः। तत्तत्र फलिष्यति लक्ष्म्या मधुमथने प्रेमकल्पलता। गतयापि विष्णुपद्या दर्शिता विष्णोरालिखिता लक्ष्मीः। सुष्ठु उत्कण्ठितो वैकुण्ठः। तन्मथनानर्थ्येऽपि अस्ति एषोऽर्थः यल्लक्ष्म्याः फलिष्यति मनोरथः। एषा खलु भगवती गङ्गादेवी समुद्रवल्लभा पावनानां शिरोमणिः शम्भुशीर्षे विष्णुपदे माहात्म्येन विविधरूपा सर्वत्र तिष्ठति। कथं पुनर्लक्ष्म्याः तज्जीवधारणम्!।

धारणं । अहह ण कअं सिंधुणाहमहादेवीए गंगाए सोहणं जं लच्छीए अग्गदो वण्णिदा तहा तहा विन्हुगुणा, वड्ढाविदो अ तस्सिं पेम्माणुबंधो। अहवा अलं मे खेएण। को एअस्स कज्जसिद्धीए संसओ, जहिं गंगादेवीए मणं पत्तिआअदि । ता इह वेलावणम्मि खणं वीसमिअ जामि । ( क्षणं विश्रम्य स्मरणमभिनीय ) अये गंगादेवीसमप्पिदं विन्हुचित्तवडंपि दाव गडुअ दंसेमि लच्छीए, जाव ण सा वेलावली समेदि । सा खु मह पेसणसमए पिदरं समुद्दं वेलावणागमणत्थं पुच्छन्ती आसि । अहंपि णिअवीसामसुहलालसो णिट्ठुरोव्व णिंदिदो य्येव संवुत्तो ।

( नेपथ्ये सरोपम् )

आः ! क एष मूर्खो व्याहरति निष्ठुर इव निन्दित एवेति । निरूपयरे पाप ! निरूपय अस्ति तवैवं व्याहरतो रसना न वेति ।

पद्मकः—( सभयम् ) आः ! को एस अकारणं कुप्पेदि ? ( इति तत इतोऽवलोकते )

( ततः प्रविशति क्रुद्धो भगवान्निष्ठुरकः )

( निष्ठुरकः सक्रोधं पुनर्निरूपयेत्यादि पठति )

पद्मकः—( स्वगतम् ) अये, भअवं एसो कुप्पदि । णूणं णिट्ठुरेत्ति एदस्स णामसमाणदाए एसो कुप्पदि । ( प्रकाशं सप्रश्रयम् ) भअवं ! पणमामि तुमं । कहिं मे णिरवराहा जीहा गम्मिस्सदि । अहं खु करुणाविरहिदं णिट्ठुरेत्ति अत्ताणं णिंदेमि[2] ।

निष्ठुरकः—( स्वगतं सवैलक्ष्यम् ) अये आत्मानं नैष्ठुर्यादसावुपालभते । ( प्रकाशम् ) भद्र ! किं पुनर्भवानेवमात्मानमुमालभते ।

---

अहह ! न कृतं सिन्धुनाथ महादेव्या गङ्गया शोभनं यल्लक्ष्म्या अग्रतः वर्णिताः तथा, तथा विष्णुगुणा वर्धार्पितश्च तस्मिन् प्रेमानुबन्धः । अथवा अलं मे खेदेन । क एतस्य कार्यसिद्ध्यां संशयः यत्र गङ्गादेव्या अपि मनः प्रत्यायति । तदिह वेलावने क्षणं विश्रम्य यामि । अये ! गङ्गादेवीसमर्पितं विष्णुचित्र पटमपि तद्गत्वा दर्शयामि लक्ष्म्यै यावन्न सा वेलावली समेति । सा खलु मम प्रेषण समये पितरं समुद्रं वेलावनागमनार्थं पृच्छन्ती आसीत् । अहमपि विजविश्रामसुखलालसो निष्ठुर इव निन्दित् एव संवृत्तः ।

१ आः ! क एषोऽकारणं कुप्यति ? ।

२ अये भगवान् एष कुप्यति । नूनं निष्ठुरेति एतस्य नामसमानतया एष कुप्यति । भगवन् ! प्रणमामि त्वाम् । कुत्र मे निरपराधा जिह्वा गमिष्यति । अहं खलु करुणाविरहितं निष्ठुरमिति आत्मानं निन्दामि ।

निष्ठुरकः—क्व पुनस्तव भर्तृदारिका ?।

पद्मकः—भअवं ! सुट्ठु मे तावेण उत्तम्मदि भट्टिदारिआ[1]।

पद्म०—चिट्ठदि समुद्दमज्झम्मि[2]।

निष्ठु०—( सोपहासम् ) या समुद्रमध्ये तप्यते सा यदि मण्डले विगतसन्तापा भविष्यति।

पद्म०—( सरोषम् । ) भअवं! णामोचिदं मन्तेसि ण दंसणोचितं। भअवन्तो खु करुणापरव्वसा मन्तेहिं तन्तेहिं दूअत्तणेहिं पि कामुआणं पि कामाइं संघडावेन्ति[3]।

निष्ठु०—( सक्रोधम् ) आः पाप ! किमालपसि !। कथमहं पुण्डरीकाक्षप्रसादमन्त्रमपहाय त्वद्भर्तृदारिकायाः स्मरसिद्धिमन्त्रमाराधयिष्ये।

पद्म०—( सप्रश्रयम् ) अज्य ! मा कुप्य । जम्मन्तरे खु तुह मंतेहि भअवं कमलणअणो पसन्नो भोदि। देवीए उण समुद्दसुआए दूअत्तणं विरअन्तस्स सहसच्चिअ समीहियं दइस्सदि[4]।

निष्ठु०—( सोपहासम् ) रे रे मूर्ख ! न तवैवं व्याहरतो व्रीडा न च मे शृण्वतः। कथं नु जलमानुषीसमागमे सकलजगदीशो भगवान्वैकुण्ठ एव समुत्कण्ठते । त्वद्भर्तृदारिकाया अपि महानयमुपहासो यत्तत्र निबिडेयमासक्तिः। नहि वापीमरालिकायाः पितामहमरालः प्रेमपात्रं भवितुमर्हति।

पद्म०—( सगर्वम् ) अज्य ! मा एवं—

इत्थीण सव्वदसणं मोहणमंतं व जयइ सोहग्गं।
बुड्डिहइ णं समुद्दे लच्छीपेम्मेण गोविंदो[5]॥

---

१ भगवन् ! सुष्ठु मे तापेन उत्ताम्यति भर्तृदारिका ।

२ तिष्ठति समुद्रमध्ये ।

३ भगवन् ! नामोचितं मन्त्रयसि, न दर्शनोचितम् । भगवन्तः खलु करुणापरवशाः मन्त्रैः तन्त्रैः दूतत्वैरपि कामुकानामपि कामान् सङ्घटयन्ति ।

४ आर्य ! मा कुप्य । जन्मान्तरे खलु तव मन्त्रैः भगवान् कमलनयनः प्रसन्नो भवति । देव्याः पुनः समुद्रसुतायाः दूतत्वं विरचयतः सहसैव समीहितं दास्यति ।

५ आर्य ! मैवम् । स्त्रीणां सर्वदशनं मोहनमन्त्र इव जयति सौभाग्यम् ।
ब्रुडति ननु समुद्रे लक्ष्मीप्रेम्णा गोविन्दः ॥

निष्ठु०—( सोपहासम् ) यद्येवं तदा गतप्रायं नारायणस्य पाणिग्रहणम् । किमेवमुत्तप्यसे ? । अहो अद्भुतमद्भुतं चक्षुःपथमेव यो नावतरति कस्तेन सह प्रेमबन्धः । रे रे मूर्ख ! अस्मदादीनामपि गुरव एवमुपदिशन्ति—

दुर्दर्शो निर्गुणः सूक्ष्मः केवलोऽङ्गुष्ठमात्रकः ।
वीतरागो महामायः कृष्णस्त्रैलोक्यमोहनः ॥ ५ ॥

पद्म०—( सक्रोधम् ) ये एवं मन्नंति ण ते तुम्हाणं गुरू जाणन्ति, ण अ तुम्हारिसा सुणेन्ति । अंधाणं अंधेसु एस रूवविसेसो व एसो । पेच्छ रे ! पेच्छ ! भअवदो कन्हस्स रूवं[1] । ( इति चित्रपटं दर्शयति )

निष्ठु०—( विलोक्य सविस्मयम् ) रे रे ! क्व पुनरयं भवता समासादितः ? । मया किलेह ध्यानाय मधुसूदनरूपमालिखितम् । अत्राहं वेलावनाश्रमे वसन्नहरहः कृष्णरूपमिदं ध्यायामि । एकदा वर्द्धिष्णुसिन्धोः कल्लोलेनापहृतः ।

पद्म०—भअवं ! एसो खु समुद्ददइआए गंगाए समुद्दसुआए महुमहविरहविहलाए लच्छीए कए महुमहालेक्खसणाहो चित्तवडो पेसिदो अत्थि[2] ।

निष्ठु०—( सक्रोधम् ) अर्पय मदीयम् ।

पद्म०—( सरोषोपहासम् ) अप्पिदो वि ण तुह हत्थे चिट्ठदि । अत्थि किंपि तुह पावं जेण आलेक्खेवि ण तुह दंसणं देदि देवो कन्हो । अदो ग्येव कल्लोलपेल्लणववदेसेण तुह हत्थादो पब्भट्टो चित्तवडो[3] ।

निष्ठु०—( सक्रोधम् ) आः पाप ! पापलेशोऽपि न मे विद्यते । इदानीं भवतः कलुषशीलस्य संलापेन भविष्यति । तदपसर्पतु भवानन्यतः कुतोऽपि ।

पद्म०—( सगर्वम् ) रे रे भगवं ! नारायणपरायणाए दुक्करं तवन्तीए लच्छीए सन्निहाणम्मि कुदो मे पावं, कुदो अ लच्छीए मणोरहाणं असिद्धी ? [4] ।

---

१ ये एवं मन्यन्ते न ते युष्माकं गुरून् जानन्ति, न च युष्मादृशान् शृण्वन्ति । अन्धानामन्धेषु एष रूपविशेष इव एषः ।

२ भगवन् ! एष खलु समुद्रदयितया गङ्गया समुद्रसुताया मधुमथविरहविह्वलाया लक्ष्म्याः कृते मधुमथालेख्यसनाथः चित्रपटः प्रेषितोऽस्ति ।

३ अर्पितोऽपि न तव हस्ते तिष्ठति । अस्ति किमपि तव पापं येनालेख्येऽपि न तव दर्शनं ददाति कृष्णः । अत एव कल्लोलप्रेरणव्यपदेशेन तव हस्तात्प्रभ्रष्टः चित्रपटः ।

४ रे रे भगवन् ! नारायणपरायणतया दुष्करं तपः तपन्त्या लक्ष्म्याः सन्निधाने कुतः पापं, कुतश्च लक्ष्म्या मनोरथानामसिद्धिः ।

तहा अ—

मज्झम्मि वसइ णिच्चं सुरसरिजलपूरपुण्णजलणिहिणो ।
सेवाए अहिरमन्ती दूसहवडवाहुआसस्स ॥ ६ ॥
पुज्जइ हिअअम्मि हरिं वच्छत्थलणिहिदकमलमालाए ।
झाणोवहाणलग्गा अवहीरिअपरिअणालावा ॥ ७ ॥
इअ धम्मकम्मकलणा हरिपअपंकअपसाअकामाए ।
कह ण फलइ लच्छीए आहारविहारविरदाए ॥ ८ ॥

संपइ उण इहय्येव जलहिनीरम्मि वेलावणकुसुमलक्खेण अवदिं रुद्दाणिं अंचइस्सदि भट्टिदारिआ[1] ।

निष्ठु०—इहागमिष्यति त्वद्भर्तृदारिका ? ।

पद्म०—अध इं[2] ? ।

निष्ठु०—तदिदानीमनुचितं समवस्थानमिह राजिजनप्रत्यासत्तौ ।

पद्म०—( सक्रोधम् ) तए परिचत्तं एदं पावणं भविस्सदि वणं[3] ।

निष्ठु०—( सरोषम् ) आः पाप ! किमालपति ? । ( इति वृषीमुद्यम्य ताडयितुमिच्छति )

पद्म०—( सक्रोधम् ) चिट्ठ रे जाव जलजंतुं कंपि दुट्ठअरं तुह कए कअन्तं वाहरेमि[4] ।

---

तथा च—

१ मध्ये वसति नित्यं सुरसरिज्जलपूरपूर्णजलधेः ।
सेवायै अभिरममाणा दुःसहवडवाहुताशस्य ॥
पूजयति हृदये हरिं वक्षःस्थलनिहितकमलमालया ।
ध्यानोपधानलग्ना अवधीरितपरिजनालापा ॥
इति धर्मकर्मकलना हरिपदपङ्कजप्रसादकामायाः ।
कथं न फलति लक्ष्म्या आहारविहारविरतायाः ॥
सम्प्रति पुनरिहैव जलधिनीरे वेलावनकुसुमलक्षेण भगवतीं रुद्राणीमर्चयिष्यति भर्तृदारिका ।

२ अथ किम् ? ।

३ त्वया परित्यक्तमेतत्पावनं भविष्यति वनम् ।

४ तिष्ठ रे ! यावत् जलजन्तुं कमपि दुष्टतरं तव कृते कृतान्तं व्याहरामि ।

निष्ठु०—( पुरोऽवलोक्य सभयम् ) आः पाप ! त्वदनुस्मृत एव जलकुञ्ज-रोऽयं दुष्टः कश्चिदुन्मज्जति । तद्यामि यतस्ततः । ( इति पलायते )

पद्म०—( निरूप्य ) णूणं एसा कुंजरं आरुहिअ लच्छी समेदि । जिस्सा उहयपासम्मि दीसदि सही लज्जा धिदी अ । ता इहय्येव पडिवालेमि[1] ।

( ततः प्रविशति यथानिर्दिष्टा लक्ष्मीः )

लक्ष्मीः—सहीओ ! अइट्ठपुव्वं मह एदं सुरहिकुसुमपब्भारनिब्भरभ-रिदं वेलावणं । ता इहय्येव सहत्थावचिदेहिं कुसुमेहिं अंचइस्सं भअवदिं रुद्दाणिं[2] ।

धृतिः—जहा सुहं भट्टिदारिआए[3] ।

लज्जा—अयि कुंजरेसर ! इह थिरो भोदु भवं[4] ।

( कुञ्जरस्तथा तिष्ठति )

पद्म०—( स्वगतम् ) इह कहिंपि पच्छन्ने पेच्छामि दाव[5] । ( इति तथा करोति )

( लक्ष्मीः अवतरणं नाटयति )

धृतिः—पिअसहि ! लज्जे ! पेच्छ तणुअत्तणं भट्टिदारिआए[6] ।

लज्जा—सुट्ठु खु दुब्बला, ण उण लक्खीअदि लाअण्णपुण्णदाए[7] ।

तहा अ—

चंगत्तणमेदाए चंदस्सग्गसहोअरस्स सारिच्छं ।

---

१ नूनमेषा कुञ्जरमारुह्य लक्ष्मीः समेति । यस्या उभयपार्श्वे दृश्यते सखी लज्जा धृतिश्च । तदिहैव प्रतिपालयामि ।

२ सख्यः ! अदृष्टपूर्वं ममैतत् सुरभिकुसुमप्राग्भारनिर्भरभृतं वेलावनम् । तदिहैव स्वहस्तावचितैः कुसुमैः अर्चयिष्यामि भगवतीं रुद्राणीम् ।

३ यथा सुखं भर्तृदारिकायाः ।

४ अयि कुञ्जरेश्वर ! इह स्थिरो भवतु भवान् ।

५ इह कुत्रापि प्रच्छन्ने प्रेक्षे तावत् ।

६ प्रियसखि लज्जे ! प्रेक्षस्व त्वं तनुत्वं भर्तृदारिकायाः ।

७ सुष्ठु खलु दुर्बला न पुनः लक्ष्यते लावण्यपूर्णतया ।

तथा च ।

चङ्गत्वमेतायाः चन्द्रस्याग्रसहोदरस्य सदृशम् ।

रणरणअदुब्बलाए अहिअं अह होइ अच्छरिअं ॥ ९ ॥

लक्ष्मीः—एध वअंसिआओ एध । उच्चिणीअन्ति कुसुमाइं[1] ।

( सर्वाः पुष्पावचयं नाटयन्ति )

लक्ष्मीः—( सहर्षाश्चर्यम् )

मालाहिं छम्मासिअमोत्तिआणं केणावि वल्लीओ विहूसिदाओ ।
एतारिसं किं इध विद्दुमाणं दीहत्तणं दीसदि पाअवेसुं ॥ १० ॥

( धृतिलज्जे इतरेतरमुखावलोकनस्मितं नाटयतः )

लक्ष्मीः—( साशङ्कम् ) सहीओ ! किं इध हसीअदि[3] ।

लज्जा—पिअसहि ! अणहिण्णा खु तुमं हसीअसि । ण एदाओ मोत्ति-अमालिआओ, विअइल्लफुल्लाइं । एदाइं कंकेल्लिकुसुमाइं ण विद्दुमदलाइं[4] ।

लक्ष्मीः—( सविलक्षं विहस्य ) ता एदाइंज्येव उच्चिणोम्हे[5] ।

( तथा कुर्वन्ति )

लक्ष्मीः—( भ्रमरबाधं रूपयन्ती ससम्भ्रमम् ) सहीओ ! के एदे लहुअ आ पक्खिसावा जन्ता उड्डेन्ति[6] ? ।

धृतिः—( विहस्य )पिअसहि लच्छि[7] !

तुह मुहपरिमलरसिआ भसला ण रमन्ति पेच्छ कुसुमेसु ।
उण्होण्हसासलहरीसंतावकरंविदा भान्ति ॥ ११ ॥

---

रणरणकदुर्बलाया अधिकमथ भवति आश्चर्यम् ॥

१ एत वयस्या ! एत । उच्चीयन्ते कुसुमानि ।

२ मालाभिः षाण्मासिकमौक्तिकानां केनापि वल्ल्यः विभूषिताः ।
एतादृशं किमत्र विद्रुमाणां दीर्घत्वं दृश्यते पादपेषु ॥

३ सख्यः ! किमत्र हस्यते ? ।

४ प्रियसखि ! अनभिज्ञा खलु त्वं हस्यसे । न एताः मौक्तिकमालाः, विचकिलकुसुमानि, एतानि कंकेलिकुसुमानि न विद्रुमदलानि ।

५ तदेतान्येवोच्चिनुमः ।

६ सख्यः ! के एते लघुकलघुका पक्षिशावकाः यान्तः उड्डीयन्ते ।

७ प्रियसखि लक्ष्मि !

तव मुखपरिमलरसिका भसला न रमन्ते कुसुमेषु ।
प्रेक्षस्व उष्णोष्णश्वासलहरीसन्तापकरम्बिता भान्ति ॥

लक्ष्मीः—( सलज्जं सस्मितम् ) सहि ! ण तुमं पुच्छिस्सं । पिअसहि लज्जे ! कधेहि एदे दे भसला जे मअरंदजीवा सुणीअन्ति[1] ? ।

लज्जा—अध इं[2] ? ।

धृतिः—पिअसहि ! अवचिदाइं पहूदाइं कुसुमाइं । अंचीअदु संपइ भअवदी भवाणी[3] ।

लक्ष्मीः—आणीअन्तु परिअणादो पूओवरणाइं[4] । ( धृतिस्तथा करोति )

( लक्ष्मीः पार्वतीपूजां नाटयति )

लज्जा—( सप्रार्थनम् )

तह अंचिदासि पव्वइ ! लच्छीए विविहकुसुममालाहिं ।
अंचेदु तुह पसाए जह कण्हं णअणकमलेहिं[5] ॥ १२ ॥

धृतिः—( सहर्षम् ) पिअसहि ! लच्छि ! दिट्ठिआ वड्ढसि । पेच्छामि तुह बाहुलअं वामं पप्फुरन्तं । पच्चासन्नं पिअदंसणं पिसुणेदि[6] ।

लक्ष्मीः—( सलज्जस्मितम् ) अवेहि अवेहि[7] । ( इति कुसुमेन ताडयति )

पद्म०—( स्वगतम् ) दंसेमि एदस्सिं अवसरे कण्हचित्तवडं इमीए । ( सहसोत्थाय ) देवि ! पुज्जीअदु एदं कण्हस्स रूवं णअणकुसुमेहिं कुसुमेहिंपि[8] ।

( इति चित्रपटमर्पयति )

---

१ सखि ! न त्वां प्रक्ष्यामि । प्रियसखि लज्जे ! कथय एते ते भसला ये मकरन्दजीवाः श्रूयन्ते ।

२ अथ किम् ? ।

३ प्रियसखि ! अवचितानि प्रभूतानि कुसुमानि । अर्च्यतां सम्प्रति भगवती भवानी ।

४ आनीयन्तां परिजनात् पूजोपकरणानि ।

५ तथा अर्चितासि पार्वति ! लक्ष्म्या विविधकुसुममालाभिः ।
अर्चयतु तव प्रसादात् यथा कृष्णं नयनकमलैः ॥

६ प्रियसखि लक्ष्मि ! दिष्ट्या वर्धसे । प्रेक्षे तव बाहुलतां वामां प्रस्फुरन्तीम् । प्रत्यासन्नं प्रियदर्शनं पिशुनयति ।

७ अपेहि अपेहि ।

८ दर्शयामि एतस्मिन्नवसरे कृष्णचित्रपटमस्यै । देवि ! पूज्यतामेतत्कृष्णस्य रूपं नयनकुसुमैः कुसुमैरपि ।

**लज्जा**—( विलोक्य सहर्षम् ) **साहु साहु किं भणणइ पोमअस्स । जहा पोमओ दव्वाणं णिही तहा सुहाणं तुमं णिही**[1] **।**

**लक्ष्मीः**—( सप्रसादस्मितं पद्मकमवलोक्य सहर्षं चित्रपटमवलोकयन्ती स्वगतं साश्चर्यम् ) **अहो रूवं अहो रूवं ! । ठाणे महामुणिणो एदं पुरिसोत्तमं अणिम्मिदं वाहरन्ति । णहु णहु एआरिसं रूवं केणावि णिम्मीअदि । ( सोत्कण्ठम् ) हिअअ ! दिट्ठिआ वड्ढसि । कुसुमिदो दाव देवीए कच्चाअणीए पसाअपाअवो संपइ उण आलेक्खदंशणपुण्णदोहदेणं य्येव फलिस्सदि**[2] **।**

**पद्म०**—**देवि लच्छि ! किं विलंबीअदि ? । एसो खु चित्तवडो गंगादेवीए पेसिदो पुज्जीअदु । जणद्दणपूआएय्येव जणद्दणो पावीअदि । किं सुन्नहिअआ तुमं ? । अहं खु तएय्येव गंगादेवीए पादवंदणं काउं पेसिदो**[3] **।**

**लज्जा**—**पिअसहि ! सोहणं मन्तेदि पोमओ । पुज्जीअदु चित्तलिहिओ महुमहो**[4] **।**

**लक्ष्मीः**—( सलज्जं धृतिमुखमवलोक्य सगद्गदम् ) **अप्पेहि पूओवअरणाइं**[5] **।**

( धृतिस्तथा करोति लक्ष्मीः । पूजां नाटयति )

**लज्जा**—( सपरिहासस्मितम् )

**कुसुमंजलिसंघडणा वेविरहत्थाए कह णु संपडइ ।**
**गग्गिरगिरा अ मन्तो समग्गवण्णो कहं होई ॥ १३ ॥**

---

१ साधु साधु किं भण्यते पद्मकस्य । पद्मकः द्रव्याणां निधिः तथा सुखानां त्वं निधिः

२ अहो रूपम् अहो रूपम् ! । स्थाने महामुनयः पुरुषोत्तममनिर्मितं व्याहरन्ति । न खलु न खलु एतादृशं रूपं केनापि निर्मीयते । हृदय ! दिष्ट्या वर्धसे । कुसुमितो देव्याः कात्यायन्याः प्रसादपादपः सम्प्रति पुनः आलेख्यदर्शनपूर्णदोहदेनैव फलिष्यति ।

३ देवि लक्ष्मि ! किं विलम्ब्यते ? । एष खलु चित्रपटो गङ्गादेव्या प्रेषितः पूज्यताम् । जनार्दनपूजयैव जनार्दनः प्राप्यते । किं शून्यहृदया त्वम् ? । अहं खलु तया एव गङ्गादेव्या पादवन्दनं कर्तुं प्रेषितः ।

४ प्रियसखि ! शोभनं मन्त्रयति पद्मकः । पूज्यतां चित्रलिखितो मधुमथनः ।

५ अर्पय पूजोपकरणानि ।

६ कुसुमाञ्जलिसङ्घटना वेपमानहस्तायाः कथं नु सम्प्राप्नोति ।
गद्गदगिरा च मन्त्रः समग्रवर्णः कथं भवति ॥

दिट्ठी वाहाउलिआ तुमम्मि झाणं सुणिब्भरं णवरि ता ।
कमलणअण! कमलं अणुअंपसु विमलसब्भावं[1] ॥ १४ ॥

( लक्ष्मीः सव्रीडस्मितं पूजां परिहर्तुमिच्छति )

धृतिः—( ससम्भ्रमं सप्रार्थनम् ) मा एवम् ।

पिअसहि ! तुज्झ पवड्ढउ काममओ महुमहम्मि सब्भावो ।
णिक्कामलअसुलआ मा मुत्तिं झत्ति पावेसु[2] ॥ १५ ॥

( लक्ष्मीः सस्मितं कुसुमाञ्जलिमारोपयति )

लज्जा—(सहर्षं सप्रार्थनं चित्रपटे लक्ष्यं बद्ध्वा ) सुहअ पुरिसोत्तम! पेच्छ पेच्छ भट्टिदारिआभत्तिं । भत्तिगेज्झो खु तुमं झत्ति पच्चासण्णो होहि[3] ।

( नेपथ्ये )

आः किमेतत् !

उच्छिद्य स्वयमुत्पतिष्णुतनवः साभोगवेगोर्मिभि-
र्बद्धव्यूहमरण्ययन्ति गगनं वृक्षाः सपक्षा इव ।
एतेन क्रियते युगान्तपवनप्रावल्यमाकस्मिकं
दुर्वातेन वितन्वताऽतिरयतः सर्वं जगज्जङ्गमम् ॥ १६ ॥

पद्म०—( स्वगतम् ) नूनमायाति सुरासुरपरिवारो मुरारिः । नूनमन्वेति तं मन्दराद्रिः, यदेष भीषणः पवनोत्पातः ।

लक्ष्मीः—( पवनवेगबाधां नाटयन्ती ) हद्धी हद्धी सहीओ णएध मं पिदुणो महोअहिणो उच्छंगं । मए खु भअवदीए कच्चाअणीए वारंवारं कअविविहरअणपूआए वेलावणकुसुमपूआणिमित्तं तादं अब्भत्थिअ इध आगदं । इध अ एअं फलं संवुत्तं[4] ।

---

१ दृष्टिः वाहाकुलिता त्वयि ध्यानं सुनिर्भरं नवरं तत् ।
कमलनयन ! कमलामनुकम्पस्व विमलसद्भावाम् ॥

२ प्रियसखि ! तव प्रवर्धतु काममयो मधुमथे सद्भावः ।
निष्कामलयसुलभा मा मुक्तिं झटिति प्राप्नुहि ॥

३ सुभग पुरुषोत्तम ! प्रेक्षस्व भर्तृदारिकाभक्तिम् । भक्तिगृह्यः खलु त्वं झटिति प्रत्यासन्नो भव ।

४ हा धिक् हा धिक् ! सख्यः ! नयत मां पितुर्महोदधेः उत्सङ्गम् । मया खलु भगवत्याः कात्यायन्याः वारं वारं कृतविविधरत्नपूजया वेलावनकुसुमपूजानिमित्तं तातमभ्यर्थ्य अत्रागतम् । अत्र च एतत्फलं संवृत्तम् ।

लज्जा—( ससम्भ्रमम् ) णाअराअ ! एहि एहि[1] । ( हस्ती सहसोपसर्पति )

( सर्वाः समारुह्य समुद्रप्रवेशं नाटयन्ति )

पद्म०—( स्वगतम् ) अये ! महोअहिमहणवुत्तन्तं गंगादेवीकधिदं ण दाव णिवेदइस्सं । सुट्ठु विहला भविस्सदि भट्टिदारिआ । वरं इधय्येव एदं परूवअन्तो चिट्ठामि[2] । ( इति तथा तिष्ठति )

( नेपथ्ये )

मधुरिपुरेष स्फुरदुरुकामः सह सुरदैत्यैर्जलधिमुपेतः ।
तुङ्गशृङ्गसमूहैर्मीलिताम्बरमुपैति मथनोद्यमहेतोर्मन्दरो गिरिराजः ॥१७॥

पद्म०—( सहर्षम् ) अनिष्टमध्येऽप्यद्य सम्भविष्यति गोविन्दसन्दर्शनं भर्तृदारिकायाः । तदहं त्वरितमुपसर्पामि जलधिमध्यम् । ( इति जलनि[illegible]गमभि-नीय निष्क्रान्तः )

( ततः प्रविशति व्योमयानेन महेन्द्रादिसुरासुरपरिवारो वासुदेवः )

वासुदेवः—( सहर्षकौतुकम् ) अयि सुरपते ! पश्य—

व्योमाङ्गणादवतरत्त्रिदशासुरौघ-
च्छायाजिघृक्षुमकरोत्करघूर्णिताम्बुः ।
अप्यत्र दूरतरवर्त्तिनि मन्दराद्रा-
वुन्मथ्यमान इव राजति सिन्धुराजः ॥ १८ ॥

तदयमवतीर्य वेलावने प्रतीक्षामहे यावदायान्ति ब्रह्ममहेशादयः सर्वेऽपि देवाः सर्वेऽपि चासुराः स च गिरिर्मन्दरः । ( इति वेलावनमध्यास्ते )

बृहस्पतिः—( समन्तादवलोक्य साश्चर्यं सभयम् )

अहो वृद्धिर्वार्धेस्तदिह हृदयं क्षुभ्यति परं
दुरन्तोऽयं मन्थः प्रसभमुपहासाय भविता ।
विधायात्र स्नानं सपदि सदनं यात विबुधाः
प्रमोदो यादोभ्यः प्रभवति न चेत्कोपि विषमः ॥ १९ ॥

---

१ नागराज ! एहि एहि ।

२ अये महोदधिमथनवृत्तान्तं गङ्गादेवीकथितं न तावन्निवेदयिष्ये । सुष्ठु विह्वला भविष्यति भर्तृदारिका । वरमत्रैव एतत्प्ररूपयंस्तिष्ठामि ।

इन्द्रः—( स्वगतम् ) अहो ! बृहस्पतेर्मन्त्रपरामर्शैकतानजडमतेर्भीरुत्वम् । तदेवं तावत् । ( प्रकाशं सगर्वम् )

किंयान्पारावारः कमलभवभृङ्गारकुहर-
क्षरद्धारारब्धत्रिदिवसरिदौपाधिकसरः ।
तदेतन्मन्थाय व्यवसितमिदं दैत्यदिविष-
त्समूहस्यैतावद्भवति हसनीयं नहि कथम् ॥ २० ॥

( सोल्लुण्ठम् )

दम्भोलिपाणेर्बलसूदनस्य
वाचस्पते! त्वं सचिवोत्तमोऽसि ।
तदत्र दुग्धाम्बुधिदीर्घिकाया-
मुत्साहभङ्गः कतमस्तवायम् ? ॥ २१ ॥

बृहस्पतिः—( सावज्ञं विहस्य ) देव प्रभो पुरन्दर !

त्रैलोक्यदाहप्रभुरौर्ववह्निः
किन्नास्य किं नास्य स कालकूटः ।
क्रोधोद्धुरेऽमुत्र नु वृत्रशत्रो
रक्षाप्रकारः कवचादिकः स्यात् ॥ २२ ॥

धनदः—( सगर्वं सावज्ञम् )

जीव पयोधेर्मथनं कारय किं वा निवारय स्वैरम् ।
शौर्यं किमत्र पातुं दुग्धं वडवानलक्कथितम् ॥ २३ ॥

बृह०—( सावज्ञोपहासम् ) दूरेऽस्तु शौर्यम् । अमुना महिम्नैवास्य

चक्रवाक इव वीचिविन्दोलो मन्दरोऽत्र भवतु भ्रमनिष्ठः ।
पार्श्वतोऽस्य परिवर्त्तनभङ्ग्या कीटका इव भवन्तु भवन्तः ॥ २४ ॥

वासु०—( स्वगतम् ) अये ! गर्वायते गीर्वाणवर्गः समुद्रोन्मथनाय । तत्पुश्रीप्रेमपाशपरवशश्चास्मि । तत्किं सुरमन्त्रिमन्त्रानुसारेण समुद्रोन्मथनोद्योगं विसृज्य प्रकारान्तरेण तत्पाणिग्रहणमारभे, अथवा सुरासुरसर्वैः समभ्यर्थ्यानीतः कथमिवैतानतिसन्धाय भग्नमनोरथान्करिष्ये ! । तदेवं तावत् । ( प्रकाशम् ) अयि वाचस्पते !

नालसं कुलिशं शार्ङ्गं न बुद्धिर्विधुरास्ति ते ।
सर्वं भावि शुभोदर्कं हरौ सहचरे मयि ॥ २५ ॥

बृह०—( स्वगतं सहर्षम् ) अये ! अनध्यवसायोक्त्यैव मे सुदृढं संवृत्तं सुरकार्यं, यदेवमयं भगवान्मुकुन्दः प्रतिज्ञातवान् । तदेवं तावत् । ( प्रकाशम् )

पाथोनिधिर्मथित एव समीहितानि
सिद्धानि तानि मधुसूदननिर्जराणाम् ।
दुष्प्रापमेतदधिगम्य वचस्त्वदीयं
पीयूषमप्यतनु सम्प्रति पीतमेव ॥ २६ ॥

इन्द्रः—( सप्रश्रयम् )

पादोदकं तव जनार्दन ! जाह्नवी या
तत्तोयपूर्णजलधेर्मथनं क्रियत्ते ।
आज्ञाकरैस्त्रिदशदानवमन्दराद्यै-
राडम्बरव्यतिकरोऽयमहो विनोदः ॥ २७ ॥

वासु०—( ऊर्ध्वमवलोक्य ) अयि सहस्रेक्षण ! दृश्यतामयमायात्येव कमलासनः । तथाहि—

दुग्धाम्बुधेर्दुग्धमदः पिपासुः
पैतामहोऽयं तरलो मरालः ।
अप्रेर्यमाणोऽपि पितामहेन
विहङ्गराजाधिकमभ्युपैति ॥ २८ ॥

इन्द्रः—( सकौतुकमूर्ध्वमवलोक्य ) कथमयं भगवान्महेशोऽपि समायाति वेगेन ! । अदृष्टपूर्वं महदेतत्कुतूहलम् । देवदेवोऽपि तरलायत एव ।

कृष्णः—महेन्द्र ! मैवम्—

क्रीडन्तु कोमलपराक्रमसन्निवेशैः
स्वर्गसदः सुरपतेः पृथुकामचाराः ।
अत्याहिते परिपतत्यथ दैवयोगा-
द्देवोऽयमेव शरणं करिकृत्तिवासाः ॥ २९ ॥

( ततः प्रविशति महेशो ब्रह्मा च )

ब्रह्मा—( सरभसमुपसृत्य )

उद्यमं कुरु गोविन्द ! पूर्णकामो भवाचिरात् ।
फलितोद्यमखेदानां विश्रामो मण्डनायते ॥ ३० ॥

महेशः—( सहर्षस्मितम् ) कृष्ण ! अनुष्ठीयतां सुरज्येष्ठशासनम् ।

वासु०—( सप्रश्रयम् )

उग्र ! त्वदग्रतो गाढं सर्वे एवोत्सहामहे ।
उज्जृम्भते हि भृत्यानां कापि शक्तिः प्रभोः पुरः ॥ ३१ ॥

तदायातु मन्दराद्रिः ।

इन्द्रः—( नभोऽवलोक्य ) कृष्णदेव ! पश्य पश्य । अम्बरादुत्तीर्य प्रत्यासन्नो बभूव महोदधेर्मन्दराद्रिः ।

अभ्युत्थित इवातिथ्यान्मैनाको गौरवेण यम् ।
समुद्रमध्यसङ्क्रान्तप्रतिबिम्बस्य कैतवात् ॥ ३२ ॥

वासु०—( सहर्षस्मितं हरकण्ठे शेषमालोक्य )

निर्मोकवद्यः पृथिवीं बिभर्त्ति
पर्यङ्कतां याति जगत्पतेर्यः
तस्यैव ते मन्दरशैल ! मन्थ-
नेत्राधिकारः फणिराजयोग्यः ॥ ३३ ॥

शेषः—( सप्रश्रयम् )—

दन्दशूकस्य कीटस्य शक्तिरेवंविधा क्व मे ।
प्रभुः करोतु यत्किञ्चिन्मयि न्यस्य स्ववैभवम् ॥ ३४ ॥

महेशः—( सस्मितम् ) नागराज ! अविलम्बितं विधेहि मुकुन्दसन्देशम् ।

( शेषः सहसा शिवकण्ठादुत्तीर्य नाट्येनोड्डीय दुग्धाब्धिमध्यगतमन्दरमभिवेष्टयति )

महेन्द्रः—( सहर्षोल्लासम् ) अये देवा अये देवा ! पूर्ववदेव अवलम्बत नागेन्द्रनेत्रमुभयपार्श्वयोः । ( सर्वे तथा कृत्वा विलोडनाभिनयं कुर्वन्ति । मन्दरस्तथैव तिष्ठति )

महेशः—( विहस्य )

सर्वेऽपि कुणयः कृष्ण ! त्वां विनामी सुरासुराः ।
त्वमेषामद्भुतो बाहुर्निष्प्रत्यूहश्चतुर्भुजः ॥ ३५ ॥

तद्व्यवस्यतु भवान् । मा भवतु विडम्बना सुरासुराणाम् ।

कृष्णः—( सहेलोपसृत्य मन्दरमावर्त्तयन्स्वगतं सोत्कण्ठम् )

तामम्बुधावत्र विचिन्त्य लक्ष्मी-
मुत्कम्पितं निःश्वसितं च दीर्घम् ।

उज्जृम्भते गद्गदशब्दता मे
मन्थश्रमः किन्तु सुसंवृणोति ॥ ३६ ॥
तत्सावहित्थमावर्त्तयामि तावत् । ( इति मन्दरमावर्त्तयति )

ब्रह्मा—( विलोक्य सकौतुकम् ) महेश ! दृश्यताम् ।

क्रीडति भ्रमरकैरिव नृत्य-
न्मन्दरः सह सुरासुरसार्थैः ।
शेषपुच्छमुखबाहुयुगस्य
द्रागगतागतमनोज्ञविनोदैः ॥ ३७ ॥

महेशः—( सहर्षाश्चर्यम् ) अहो महत्कौतुकं वर्त्तते ! । तथाहि—

साटोपसम्पातरयप्रकर्षा-
दुल्लासिनस्तुङ्गतरङ्गकूटाः ।
हस्ता इव क्रोधनदुग्धवार्धेः
पतन्त्यमी मन्दरशैलमौलौ ॥ ३८ ॥

वासु०—( आकर्णनाभिनयं कृत्वा ) तिष्ठत तिष्ठत क्षणम् । निर्गच्छदिव किमपि विभाव्यते ।

( सर्वे निश्चला भवन्ति )

वासु०—( सहर्षकौतुकम् )

कथितकुलिशपातदुर्निमित्त-
स्फुरदुरुमेघविलक्षगर्जितान्ते ।
ध्वनिरिव मधुरः कलापियूनः
सुखयति मन्थरवात्पयश्चरोऽयम् ॥ ३९ ॥

( ततः प्रविशन्ति वेदाः )

वासु०—(ज्ञानेन प्रत्यभिज्ञाय स्वगतं सहर्षम्) दिष्ट्या नूनममी वेदाः समागताः।

बलिः—( सप्रश्रयम् ) भगवन् जगदीश ! साधारणः प्रभुरसि सुराणामसुराणां च । समानभक्तिव्यवसायेषु च परिजनेषु समानप्रसादाः प्रभवो भवन्तीति विचिन्त्यम् ।

महेशः—( स्वगतम् ) अये विभागलालसा दानवाः ! । अप्रियं च तद्दानवारेस्तदेवं तावत् । ( प्रकाशम् ) अयि दानवेश ! अलमुत्सुकतया । किमौचित्यमच्युतात्प्रच्यवते ? । तदयमेव प्रमाणम् ।

कृष्णः—( सहर्ष स्वगतम् ) साधु सर्वज्ञ ! साधु, यत्किमपि न विशिष्टं सन्दिष्टवानसि । तदेवं तावत् । ( प्रकाशम् ) अयि दानवेश ! यद्यन्निःसरति सागरात्तत्तदद्यापि सागरगर्भ एव तिष्ठतीति सम्प्रधार्यताम् । वस्तुजातं च वेलावने पालयन्तु दिक्पाला अग्नियमनिर्ऋतयः । सिद्धे समुद्रमथनोद्यमे भर्गाज्ञया विभागोऽस्तु ।

बलिः—यथा रोचतेऽच्युताय ।

कृष्णः—अयि भगवन्तो वेदाः ! समुचितेऽत्र वेलावने व्यपनीयतां तावदयं मथनायासो दिक्पालशुश्रूषया ।

अग्न्यादिदिक्पालाः—( सप्रश्रयम् ) इत इतोऽत्र भवन्तो वेदाः ।

( परिक्रम्य सर्वे तथा तिष्ठन्ति )

कृष्णः—( सोल्लासम् ) अये देवासुराः ! पुनर्विलोडयत गाढम् । ( सर्वे तथा कुर्वन्ति )

कृष्णः—तिष्ठत तिष्ठत तावत् ।

( सर्वे तिष्ठन्ति )

कृष्णः—( निरूपणामभिनीय साश्चर्यम् ) गरीयान्कश्चिदिदानीमायाति ।

आयात्यर्वाग्वीचीमालास्फूर्जत्फेनावेगाभोगात् ।
गर्जाभङ्गिर्वल्गत्येषा प्रत्यग्राब्दध्वानोदारा ॥ ४० ॥

( ततः प्रविशत्यैरावतः )

इन्द्रः—( विलोक्य सविस्मयम् )—

दम्भोलिघातचकितः प्रसभं पुरा यः
पाथोधिकोणकुहरे निभृतं निलीनः ।
उत्तुङ्गश्रृङ्गसबलः पृथुमन्थखेदा-
न्मैनाक एष स पुनर्बहिरभ्युपैति ॥ ४१ ॥

कृष्णः—( स्वगतम् ) दिष्ट्या नूनमयमैरावतः करी । ( प्रकाशम् ) अयि रमेशान ! निर्गतोऽयं गजेन्द्रस्तद्विलोक्यताम् ।

महेशः—( सहर्षस्मितम् ) राजत्वमर्हति कुञ्जरविशेषोऽयम् । अधितिष्ठतु शिशिरशिशिरां वेलावनतरुच्छायाम् ।

( ऐरावतस्तथा करोति )

वासु०—अपि चालयत पुनर्मन्थाचलम् ।

( सर्वे तथा कुर्वन्ति )

वासु०—स्थीयतां स्थीयताम् पुनः किञ्चिदायाति ।

( सर्वे स्थिरा भवन्ति )

बलिः—( विलोक्य ) अयि वासुदेव ! व्यर्थमिदानीं संवृत्तं मन्दरावर्त्तनं, यदिदमवस्तुभूतमिव किञ्चिन्निःसरति।

वासु०—( स्वगतम् ) व्यर्थमेव भवतां मन्दरावर्त्तनम् । अवस्तुभूतं च सर्वं भवतां भविष्यति ।

इन्द्रः—साधूक्तं दानवराजेन । तथाहि—

प्राणमारुतहतोल्लसदूर्ध्व-
क्षीरसीकरकृतोत्करवृष्टिः ।
वार्द्धिमध्यगतपर्वतशृङ्गा-
द्व्याकुलः स्फुटमुपैति हयास्यः ॥ ४२ ॥

तदवस्तुभूत एवायम् ।

वासु०—निर्गच्छतु निःशेषस्तावत् ।

( ततः प्रविशत्युच्चैःश्रवाः )

वासु०—( विलोक्य स्वगतम् ) अये ! अयं हयराज उच्चैःश्रवाः सर्वलक्षणसम्पूर्णः श्रूयते । तदेवं तावत् । ( प्रकाशं सपरिहासम् ) प्रभो शम्भो ! सर्वलक्षणसम्पूर्णोऽयमश्वमेधयोग्यो हयो दीयतां भगवते हिरण्यगर्भाय ।

ब्रह्मा—( सपरिहासम् ) अहो ! अस्मासु हरेर्हयप्रतिग्रहं कारयितुमुपचिकीर्षा ।

महेशः—( सहर्षं विहस्य ) अयि कृष्ण ! सेमाङ्गत्वादयमपि हस्तिसविधमध्यास्ताम् ।

( उच्चैःश्रवास्तथा करोति )

कृष्णः—( सोल्लासम् ) अये भ्रमयन्तु पुनर्मन्दरं भवन्तः ।

( देवा सुरास्तथा कुर्वन्ति )

धनदः—( साश्चर्यं सवितर्कम् ) अये ! मथनं मन्थरीकृत्य दृश्यतां तावत् ।

प्रह्लादनं द्रव्यमुदेति किञ्चि—
दालक्ष्यवृत्ताकृतिसंनिवेशम् ।
यत्कान्तिपूरप्रसरेण वार्द्धिः
मन्थक्रुधा द्यामधिरोहतीव ॥ ४३ ॥

( ततः प्रविशति चन्द्रः )

**इन्द्रः**—( सहर्षं सवितर्कम् )

किमयममृतकुम्भः किन्नु मन्थापमर्द-
व्यथितजलधिदुग्धस्नेहपिण्डोऽयमीदृक् ।
किमिदमननुभूतं भूतमाह्लादि किञ्चि-
त्किमिव नहि विचित्रं स्यात्पयोधौ विचित्रे ॥ ४४ ॥

**कृष्णः**—( स्मरणमभिनीय स्वगतं सोत्कण्ठम् )

तच्चित्रदृष्टं किमु वक्त्रमेत-
दाविर्भवत्यम्बुनिधेः सुतायाः ।
अपि श्रुतं यत्कुसुमायुधस्य
मृत्युञ्जयत्वादमृतं जिगाय ॥ ४५ ॥

( निपुणं निरूप्य ) अये ! कलङ्ककलुषमन्यदेव किमपि । न तद्वक्त्रम् ।
( सखेदं निःश्वस्य )

प्रियामुखाशया दृष्टिर्धाविता मेऽत्र निर्मले ।
द्रागेवापसरत्येषा कलङ्कगलहस्तिता ॥ ४६ ॥

( निरूप्य ) नूनमनेन पीयूषमयूखेन भवितव्यम् । ( प्रकाशम् ) प्रभो ! शङ्कर ! सुधाकरोऽयं सम्प्राप्तः ।

**चन्द्रः**—( महेशमालोक्य सहर्षं स्वगतम् ) दिष्ट्या प्रमथितो मे पिता पाथोधिर्येन महामुनिभिरपि दुरासदसन्दर्शनो नयनपथमवतीर्णो भगवान्प्रमथनाथः ।

**महेशः**—( सुधांशुमालोक्य स्वगतम् ) अये महाफलः संवृत्तः पाथोधिमथनायासो यदयमासादितो यज्वनां परिवृढः । ( प्रकाशम् ) अयि कृष्ण !

ककुभि ककुभि वर्षन् शैत्यगर्भान्गभस्ती-
न्मथनजनितखेदं खण्डयन्वः प्रकामम् ।
अधिवसतु मुहूर्त्तं वार्द्धिवेलावनालीं
द्विजपरिवृढ एष ग्रामणीः प्रीणमानः ॥ ४७ ॥

(चन्द्रस्तथा करोति)

कृष्णः—(सहर्षोल्लासम्) अहो ! पाथोधिमथनस्याद्भुतानि फलानि। तद्भूयोऽभिवर्त्ततां मन्दरावर्त्तः।

(सुरासुरास्तथाकुर्वन्ति)

वरुणः—(पुरोऽवलोक्य सखेदम्) आः ! किमामूलतो व्यथितः पाथोधिर्यदेताः समुल्लसन्ति शेवाललताः !।

इन्द्रः—(साश्चर्यम्)

ताहग्विधैर्मन्दरदुर्विवर्त्तै-
विनाशमायुर्जलजन्तवो ये।
प्राणन्ति ते पश्यत सद्य एव
झम्पालिवाचालितवार्द्धिपूराः॥ ४८॥

सर्वे सुरासुराः—अहह ! चित्रं चित्रं मोदामहे।

अङ्गमङ्गमधिकृत्य वर्द्धते
ताहगेव बलवान्बलोदयः।
मन्थशैलपरिवर्त्तनश्रमः
सद्य एव शममेति दारुणः॥ ४९॥

तत्किमेतत् ?।

वासु०—(विमृश्य) नूनमेता महौषधयो न शेवाललताः।

(ततः प्रविशन्ति महौषधयः)

कृष्णः—(सहर्षम्)

अम्लानपुष्पभरसम्पदुपास्यमाना
मृत्युच्छिदस्त्वमिव शङ्कर ! पुण्यशीलाः।
अभ्यागताः शिव ! महौषधयस्तदासा-
माज्ञां प्रयच्छ महसा हसितानलाभाम्॥ ५०॥

महेशः—(सहर्षम्)

दुग्धाम्बुधौ जन्म सुधा स्वसा सा
परोपकाराय रसप्रकर्षः।
आसां प्रसङ्गेन महानुभावा
भवन्तु वेलावनशाखिनोऽपि॥ ५१॥

कृष्णः—क्रियतां महेशनिदेशः ।

( औषधयस्तथा तिष्ठन्ति )

वायुः—( सोत्साहम् ) अयि देवदानवाः ! विवर्त्तयत मन्थाचलम् । अहमपि निजवेगवैभवेन सहस्रगुणीकरोमि तद्वेगम् । वितरतु रत्नाकरो दुष्प्रापपदार्थान् ।

( देवदानवास्तथा कुर्वन्ति )

कुबेरः—( साश्चर्यम् ) आस्तामास्ताम् । पश्यत पश्यत विविधवर्णतां महार्णवस्य ।

कृष्णः—( सवितर्कम् )

उत्प्रेक्षन्ति तुषोत्कटस्य वडवावह्नेः किमेताः शिखाः
सिन्धुर्दर्शयते पुरन्दरधनुर्निर्जिष्णु किंवा धनुः ।
एतत्किञ्चिदुदीयतेऽद्भुतमयं द्रव्यान्तरं किन्नु वा
यज्ज्योतिर्निचयैर्घनं कवचितो नेत्रायते सागरः ॥ ५२ ॥

( ततः प्रविशन्ति विविधवर्णानि रत्नानि )

कृष्णः—( निरूप्य सहर्षम् ) अये ! रत्नानि समागतानि । इदमेतेषु किमपि मांसलं कुटिलं प्रधानरत्नम् । ( सोत्कण्ठम् )

शृङ्गारिताशेषसमुद्रपूर-
मिदं मनोहारि न रोचिषैव ।
जन्मान्तरोपार्जितबन्धुकल्पं
हार्दादपि द्रावयतीव चेतः ॥ ५३ ॥

तदावेदयामि देवदेवस्य। श्रीकण्ठ ! निरूपय निरूपय। रत्नानि समागतानि।

महेशः—( सहर्षम् ) अद्य कृतार्था पृथिवी । ननु वक्तव्यं समागतानि निधानानि, समागता लक्ष्मीः , समागतममृतम् । तदिदानीम्—

एतेऽत्र पावनशिरोमणयो भजन्तां
वेलावनाभरणतां मणयो मुहूर्त्तम् ।
आयामिभिः किरणबाहुभिरम्बुराशे-
रामभ्रकालपरिरम्भमिवार्पयन्तः ॥ ५४ ॥

( रत्नानि तथा तिष्ठन्ति )

वासु०—( स्वगतं सहर्षम् ) हृदय ! हृदय ! दिष्ट्या वर्द्धसे कमलावलोकनप्रत्यासत्त्या । नहि नहि महेशव्याहृतयो वृथा भवन्ति । ( प्रकाशं सौत्सुक्यम् ) त्वरध्वं त्वरध्वं सुरासुराः । भ्रमयन्तु भवन्तो मन्थाचलम् ।

( सर्वे तथा कुर्वन्ति )

इन्द्रः—( साश्चर्यं ससम्भ्रमम् ) शाम्यतु शाम्यतु तावन्मथनावर्त्तः । अवतरति किमपि सौम्यतरं वस्तु ।

( सर्वे साश्चर्यं निरूपयन्ति )

वासु०—( विलोक्य सवितर्कम् )

समुल्लसत्सौम्यमहोमहोर्मिः
सहोदरः किं भवितायमिन्दोः ।
अपूरको नेत्रमहोत्सवस्य
मध्ये स तादृङ् न तु कालिमास्ति ॥ ५५ ॥

इन्द्रः—( निरूप्य साश्चर्यम् ) अहो ! सहसैव निर्गत्य स्फुटीबभूव स्त्रीरूपमिदम् ।

वासु०—( विभाव्य साश्चर्यम् ) अहो ! रूपमस्याः ।

अधिजलनिधिगर्भं कोऽपि लावण्यवार्द्धि-
र्निवसति जनिरस्यास्तत्र नूनं बभूव ।
भवति हि कथमित्थं योग्यताऽस्यैव वार्द्धे-
रमृतकरसुधाद्या यत्प्रसूतिः प्रशस्या ॥ ५६ ॥

अपि च—

अस्याः स्फुरत्कान्तिविभूषिताब्धेः
कल्लोलदोलातरलाङ्गयष्टेः ।
आपूरयन्त्याः ककुभोऽक्षिपद्मै-
राकल्पमेवाभरणत्वमेति ॥ ५७ ॥

( प्रत्यभिज्ञाय स्वगतं सोत्कण्ठम् ) नूनमियं गङ्गया आलिख्य कथिता सा पयोधिपुत्री भविष्यति । तथाहि—

आलेख्ये दृष्ट्वैतां यश्चेतसि परिचयो ममाङ्कुरितः ।
उत्पल्लवः स सहसा सहस्रभासत्वमभ्येति ॥ ५८ ॥

( ततः प्रविशति लक्ष्मीः )

लक्ष्मीः—हद्धी ! हद्धी ! अहो मह हअजीवस्स कढिणत्तणं जं एआरिसे वि विसमवैअरे ण णीहरदि । ( पुरः कृष्णमालोक्य सप्रत्यभिज्ञमिव ) कधं आलेक्खदिट्ठं तं सुहअं अणुहरदि एसा रूवरिद्धी । ( निःश्वस्य ) अहवा कुदो एआरिसाइं भग्गाइं ? । किं करेमि । तहवि अहिरमदि इध मे दिट्ठी । ( इति अभ्रमवलोकते )

वासु०—( स्वगतं सहर्षम् ) हृदय ! दिष्ट्या वर्द्धसे । महत्यपि सम्भ्रमे साकूतमिव दृष्टमस्याः । तथाहि—

साभोगवेगमथनक्रमसम्भृतोष्म-
क्षीराब्धिवीचिपटलीपरितापितानि ।
अङ्गानि मे शिशिरयन्ति सरोरुहाक्ष्या
अक्लिष्टमुग्धलहरीसुहृदः कटाक्षाः ॥ ५९ ॥

महेशः—( लक्ष्मीं दृष्ट्वा स्वगतम् ) नूनमियं सा भाविनी पुरुषोत्तमस्य वल्लभा लक्ष्मीस्तदेवं तावत् । ( प्रकाशं साकूतम् ) अयि पुरुषोत्तम ! समुद्धरैतामद्वितीयामशरणां पाणिग्रहणेन योषितम् ।

लक्ष्मीः—( स्वगतं सहर्षम् ) कधं एसो पुरिसोत्तमो ! । एदं एस कोवि अवरो महाणुभावो आदिशदि । ता किं अणुकंपिस्सदि मं पआवई[2] ।

वासु०—एष सम्पादयामि शिवनिदेशम् । (इति पाणिं प्रसार्य लक्ष्मीमानयति)

लक्ष्मीः—( स्वगतं सोत्कटं वैकुण्ठकण्ठमवलम्बमाना ) अच्छरिअं अच्छरिअं

---

१ हा धिक् हा धिक् ! मम हतजीवस्य कठिनत्वं यदेतादृशेऽपि विषमव्यतिकरे न निःसरति। कथमालेख्यदृष्टं तं सुभगमनुहरति एषा रूपर्द्धिः । अथवा कुत एतादृशानि भाग्यानि किं करोमि । तथापि अभिरमतेऽत्र मे दृष्टिः ।

२ कथमेष पुरुषोत्तमः । एनमेव कोऽपि अपरो महानुभाव आदिशति । तत्किमनुकम्पिष्यते मां प्रजापतिः ।

तादस्स महणदुक्खे विरहे चंदादिबंधुवग्गस्स ।
उक्कमणे पाणाणं को एसो पहरिसो जाओ ॥

(प्रकाशं विवृत्य समुद्रमवलोक्य सखेदम्) अह्वो मे पिदुणो महणवेअणाए पज्जाउलत्तणं ।

वासु०—(सोल्लासम्)

मुञ्च सुभ्रु ! भयमेष ते पिता
प्रार्थ्यते न खलु मथ्यतेऽम्बुधिः ।
आगतान्वदति देवदानवा-
न्मन्दरस्तमवहेलनिष्ठुरम् ॥ ६० ॥

(स्वगतम्) इयदेव मे सुखं, परार्थः कायक्लेशोऽपरः । (इति सव्रीडं कथङ्कथमपि कण्ठात्तामवतारयति)

लक्ष्मीः—(सहर्षमात्मगतम्) अणूभूदं मए अमअं, अणुभूदो चंदो, अणणुभूदं मए एअं वअणमहुरत्तणं । ता णूणं एस सो ज्जेव सुहओ । संवदन्ति ते गंगादो आअण्णिदा गुणा एदस्सिं ।

वासु०—(सप्रश्रयम्) अयि परमेश ! आगतेयं लक्ष्मीः ।

महेशः—कृष्ण ! कृष्ण ! प्रथमत एव मया ज्ञातं, यत्तरलायितमस्य जनन्या रत्नाकरपत्न्या मम मौलिमन्दाकिन्या । (गङ्गां प्रति) अयि गङ्गे कामरूपे ! विश्रमय वेलावने कमलालयाम् ।

(गङ्गा सहसोत्थाय तथा करोति)

बलिः—(स्वगतं सविषादम्) अह्वो ! दुराशयतामिव महेशकेशवादीनामवधारयामि । यदेते धारयन्ति, न विभजन्ते पाथोधिमथनोपात्तानि वस्तूनि । (सावज्ञम्) भवतु । पश्चादपि बाहुबलेनैव सुलभानीतराणि वस्तूनि, यावन्न

---

१ आश्चर्यमाश्चर्यं ।

तातस्य मथनदुःखे विरहे चन्द्रादिबन्धुवर्गस्य ।
उत्क्रमणे प्राणानां क एष प्रहर्षो जातः ॥

अहो मे पितुः मथनवेदनया पर्याकुलत्वम् ।

२ अनुभूतं मया अमृतम्, अनुभूतश्चन्द्रः, अननुभूतं मयैतद्वदनमधुरत्वम् । तन्नूनमेष स एव सुभगः । संवदन्ति ते गङ्गात आकर्णिता गुणा एतस्मिन् ।

दिविषदः पीयूषं निपीयामरा भवन्ति । तदमृताविर्भावसमये मया अवहितेन भाव्यम् । तदेवं तावत् । ( प्रकाशम् ) सखे कुजम्भ ! एह्येहि ।

कुजम्भ०—( प्रविश्य ) किमादिश्यते ?

( बलिः । कर्णे एवमेव )

कुजम्भः—( सहर्षोल्लासम् ) सिद्धमेतत् ।

इन्द्रः—भगवन्नारायण ! त्वत्परायणोऽयं व्यवसायः । किमिदानीमेव मन्दायसे ? ।

वासु०—( मन्दरमावर्त्तयन्स्वगतं सोत्कण्ठम् )

यावद्बभूव हरिणार्भकलोचनाया-
श्वासप्रगल्भपरिरम्भसुखोपभोगः ।
बाह्वोर्बलं मतिबलं व्यपनीय काम-
स्तावद्विडम्बयति मां करवै किमत्र ॥ ६१ ॥

( प्रकाशं सावहित्थम् ) अयि गीर्वाणाः ! अयि दानवाः ! सर्वप्राणेन परिभ्रमयत पुनर्मन्थाचलम् ।

( सर्वे तथा कुर्वन्ति )

धनदः—पश्यत पश्यत कुम्भानामिव मुखान्युत्प्रेक्षन्ति ।

इन्द्रः—( ससम्भ्रमम् ) आस्तामास्तां तावन्मन्दरावर्त्तनम् । कथं समग्रा एव कुम्भाः समुत्तरन्ति । ( सवितर्कम् ) किममी स्फुटितत्वाद्विरिक्ताः कथमन्यथोत्तानमुखास्तरन्ति ।

धनदः—( सवितर्कम् ) विचित्रा किमियमुत्तानमुखी कौम्भी नौरद्भुतनिधौ पयोधौ ! ।

वासु०—( निरूप्य सहर्षम् )

कौम्भी ध्रुवं नौरियमभ्युपैति
विनिर्मिता किन्तु निधानकुम्भैः ।
यस्याः प्रसिद्धा भुवनत्रयेऽपि
दारिद्र्यवार्द्धेस्तरणे प्रसक्तिः ॥ ६२ ॥

इन्द्रः—( साश्चर्यम् ) कृष्ण ! कृष्ण ! पश्य पश्य उपनिधानकुम्भं किञ्चिदपरं विनिर्गच्छति । ( क्षणं निरूप्य सहर्षाश्चर्यम् )

कुम्भोऽयमम्भोनिधिपूरमध्या-
दत्यद्भुतः कोऽप्युदयांबभूव ।
असंस्तुतं किञ्चिदुदञ्चयन्ति
यद्गन्धवाहाः परमप्रमोदम् ॥ ६३ ॥

कृष्णः—( सहर्षं स्वगतम् ) नूनमनेन पीयूषकुम्भेन भवितव्यं, यदस्य सन्दर्शनादेव ममाप्यन्तरात्मा प्रहर्षव्याकुलतामुपैति । ( प्रकाशं सहर्षम् ) महेश ! महेश ! दिष्ट्या वर्द्धसे पीयूषसमागमेन । निधानकुम्भा अप्यमी समागताः ।

महेशः—( सहर्षं ससम्भ्रमम् ) कृष्ण ! कृष्ण ! अवहितेनात्र भवता भवितव्यम् । स्वयमेव सम्भावयन्तु वेलावनं निधानकुम्भाः । आहूय समर्पय हुतभुजः पीयूषकुम्भम् ।

कृष्णः—( सहर्षमुच्चैःकारम् ) पावनशिरोमणे पावक ! एह्येहि ।

बलिः—( ससम्भ्रममिव ) सखे कुजम्भ ! स्वयमेव देवदेवो जनार्दनः पावकमाह्वयते । तत्त्वं गत्वा समानय वेलावनात्पावकम् । ( इति काक्षेण वीक्षते )

कुजम्भः—( सहसा निर्गत्य पावकवेषः प्रविश्य सप्रश्रयम् ) किमादिशति देवदेवः केशवः ? ।

कृष्णः—( सहर्षम् ) सखे शोचिःकेश ! मुखमसि सर्वेषां, मुख्योऽसि सर्वेषु, तद्गृहाण पीयूषकुम्भम् । ( कुजम्भ प्रतीच्छति )

कृष्णः—( सोपहासमिव ) सखे शिखिन् ! किं पुनस्त्वं मन्दतेजाः संवृत्तः?।

कुजम्भः—( सप्रश्रयम् ) किमस्मदादीनां त्वत्समीपेऽपि तेजः समुदीयते ? । ( इति निष्क्रामति )

बलिः—( स्वगतं सहर्षम् ) साधु साधु समर्थितं कुजम्भेन ।

वासु०—( सहर्षोत्साहम् ) अयि दानवाः ! कृतकृत्याः संवृत्ताः स्मस्तदिदानीमुद्दामरभसाः सहस्रगुणबलेन चलयत मन्थाचलम् ।

( सर्वे तथा कुर्वन्ति )

वायुः—( सभयम् ) अहह ! क्रुद्धमिवेदानीं वैवर्ण्यमापद्यमानमम्भोनिधिमवलोकयामि । इतश्च कश्चिद्दुष्टो जलजन्तुरिव निर्गच्छति ।

इन्द्रः—( सम्यग्विभाव्य ) नैष जलजन्तुः ।

भीषणोऽतिकुटिलः कठिनात्मा
मर्मकर्त्तनविचक्षणवक्त्रः ।
अङ्कुशः खल इवैष पयोधे-
र्दुष्टचेष्टितनिधिः समुपैति ॥ ६४ ॥

धनदः—( साश्चर्यम् ) पश्यत पश्यत । इतश्चायम्—

दुःसहः सुरपतेरिव दण्डो
दण्ड एष समुपैति कठोरः ।
यद्भयेन जलजन्तुसमूहो
दूरतोऽपसरति क्वचिदब्धौ ॥ ६५ ॥

वायुः—( सभयम् ) समुल्लसत्कान्तिपूरानुसारदृश्यमानशरीरो मीनः कश्चिदितोऽभिवर्त्तते ।

इन्द्रः—( निरूप्य ) मैवम्

आवर्त्तते तिमिरयं यदि तत्किमस्य
स्पर्शाद्विदीर्णतनवस्तिमयो म्रियन्ते ।
सत्त्वाभिरामपुलकोत्करसङ्कुलाङ्ग-
स्तद्वारिधेरयमुदञ्चति मण्डलाग्रः ॥ ६६ ॥

वासु०—अयि परमेश ! पश्य पश्य । परिकुपितः पारावारः ।

महेशः—( सावज्ञम् ) किमस्य सैनिकाः सायुधा विनिर्गता उतायमेव स्वयमुदायुधो विक्रामति ? । गभीरोऽयं महात्मा वैदेशिकः कोपप्रकारेषु । मथनायासोल्लसितानि महानुभावानि स्वयमायुधानि निष्क्रामन्ति । तदेतानि साधिदैवतानि नमस्कृत्य वासय वेलावने । देवानामेवैतानि सुलभानि महते फलाय भविष्यन्ति ।

( कृष्णः तथा कृत्वा पुनस्तथैव मथनावर्त्तं प्रवर्त्तयति )

महेन्द्रः—( विलोक्य साश्चर्यम् ) कृष्ण ! कृष्ण ! पश्य पश्य । आश्चर्यमयं किमप्यतिप्रमाणं मरकतरत्नं समुल्लसति ।

वासु०—( निरूप्य )

आनन्दसन्दोहनिदानशक्ते-
रुदीयते पात्रमिदं सुरायाः
तद्गन्धगाध्र्यग्रहगाढलग्नै-
र्भृङ्गोत्करैर्मारकतं विभाति ॥ ६७ ॥

धनदः—( ससम्भ्रमम् ) अत्याहितमत्याहितम् पश्यत तावदितः ।

इहोपरिष्टाद्विहगा भ्रमन्तः
कल्लोलवातोपहताः पतन्ति ।
परासवोऽमी तिमयो भवन्ति
द्रागारनालत्वमुपैति दुग्धम् ॥ ६८ ॥

इन्द्रः—( विभाव्य ) पश्यत पश्यत । विनिर्गतैव काचिदिह वल्ली ।

कृष्णः—( निरूप्य ) नूनं विषमिदम् । अहह ! अत्याहितमापतितम् । शिव ! शिव ! सुरा समागता, विषं चागतम् ।

महेशः—( ससम्भ्रमम् ) कृष्ण ! कृष्ण ! साधिदैवतं द्रव्यद्वयमिदं प्रसाद्य वेलावने निवेशयतु भवान् ।

( कृष्णस्तथा करोति )

महेन्द्रः—( सरभसम् ) अयि सुरासुराः ! तथेदानीं समधिकबला विरचयत विलोडनं , यथा समासादिताद्भुतपदार्थाः पुनर्विलोडनाय न स्पृहयामहे ।
( सर्वे तथा कुर्वन्ति )

( नेपथ्ये कलकलः )

वासु०—( समाकर्ण्य ससम्भ्रमम् ) आः ! क एष मन्दरापरपार्श्वे सुरासुराणां भीषणः कलकलो विजृम्भते ? ।

( पुनर्नेपथ्ये )

धूमः प्रेङ्खति कोऽपि सान्द्रमशुचिर्नेत्राणि निर्वासयन्
ज्वालौघामृतमारणप्रणयिनः प्रेङ्खन्ति पश्चादमी ।

दुग्धप्लोषविलक्षगर्वविषमच्छङ्कारवाचालितः
क्षीराब्धिः पुनरेति मेचकरुचिः कोऽप्येष बोषर्बुधः ॥ ६९ ॥

वासु०—( सभयं साश्चर्यं समन्तादवलोक्य ) कथमहह ! क्षणादेव न किमपि पश्यामि ।

नष्टः कुत्र महार्णवः क नु ययौ तादृक्स मन्थाचलो
विद्राणः क फणीश्वरः क नु गतास्ते हन्त देवासुराः ।
दिक्चक्रं ज्वलयन्निरङ्कुशमिलदङ्घोरान्धकारोर्मिभिः
पातालायितरोदसीपरिकरः कोऽयं प्रकारोऽभवत् ॥ ७० ॥

महेशः—( ससम्भ्रमम् ) अयि कृष्ण ! पालने तव नियोगस्तदिदानीं सह देवासुरैः समुद्रमथनोपात्तवस्तूनि गृहीत्वा क्वचित्परिपालय । अहमेनमनर्थं शमयामि ।

( इति निष्क्रान्ताः सर्वे )

प्रथमोऽङ्कः

# द्वितीयोऽङ्कः

( ततः प्रविशति कपटकामिनीवेषो वैकुण्ठः सखीवेषो वैनतेयश्च )

वैनतेयः—( सहर्षम् ) अयि जनार्दन ! सकलजगद्रूपस्य कथं भवतोऽद्भुतरूपनिर्माणनैपुणे श्लाघा ?। अद्य पुनर्यदिदं भवता वनितारूपमाविष्कृतं नहि तद्भवताप्यनुभूतपूर्वम्। किं पुनरयं पुरुषशून्ये वेलावने निकुञ्जे निरर्थको भवता सफलीकृतमदनप्राक्तनसुकृतपरिपाको हेवाकः प्रसार्यते ?। तथाहि—

दृशोर्द्वन्द्वं खेलत्यलसमलसं कर्णसविधे
नटन्ती भ्रूवल्ली कुसुमविशिखं वीजयति च।
मुहुः स्मेरस्मेरं मदयति मुखाम्भोरुहमिदं
स्वतः क्षोभं यासि त्वमपि मुकुरं पश्यसि यदा ॥ १ ॥

वैकुण्ठः—सखे वैनतेय ! अर्थश्शृङ्गारोऽयमद्भुतो महतेऽर्थाय प्रगल्भते। हेवाकाभिनयं चात्राकस्मिकपुरुषागमनशङ्कया प्रसारयामि।

वैन०—( ससम्भ्रमम् ) कथं शब्द इवेह श्रूयते !। नूनमायाति कश्चित्।

वैकुण्ठः—( साशङ्कम् ) सखे वैनतेय ! तदितःप्रभृति योषिद्भावाभिनयार्थमावाभ्यां प्राकृतभाषया तदनुरूपः कृतार्थीकृतकुसुमचापः संलापः क्रियताम्।

वैन०—( पत्रान्तरालैरालोक्य अपवारितकेन ) आयात एव सानुचरः कश्चिन्महानुभावः पुरुषविशेषः।

( ततः प्रविशति बलिः कुजम्भश्च )

बलिः—( सपरितोषम् ) सखे कुजम्भ ! साधु साधु भवता कृतं, यन्महता नैपुणेन पीयूषमानीतम्। किं पुनः पीयूषं लब्धमप्यलब्धमेव, यन्मया न समासादिता जलधिकन्यावमानिलावण्या कापि कन्या।

कुजम्भः—( स्वगतं सजुगुप्सम् ) अहो ! अस्य मदनमोहान्धता, यदयममृतं कामिनीसमागमादधरमवधारयति। ( प्रकाशं सप्रश्रयम् ) तदपि न भवतो बलवद्भाग्यस्य बलैर्दुष्प्रापमवधारयामि।

वैकुण्ठः—( स्वगतं सोपहासम् ) द्वयमपि दुष्प्रापं भविष्यति।

बलिः—सखे कुजम्भ ! किं पुनरितो मृगमदामोदः प्रवर्त्तते ?।

कुजम्भः—( आघ्राणमभिनीय साश्चर्यम् ) अयि दानवेश !

नायं विपिनलतानां सहस्रशःपरिचितो हि तद्गन्धः ।
मृगमदपरिमललहरी पिशुनयति किमप्यधिष्ठानम् ॥ २ ॥

तदुत्थाय निरूपयामि तावत् । ( तथा कृत्वा सहर्षाश्चर्यम् ) दानवेश ! एह्येहि कृतार्थय चक्षुषी । अद्यप्रभृति ते सफलं जन्म । अदृष्टपूर्वं पश्य कन्यारत्नम् ।

( बलिः सोत्कण्ठमुत्तिष्ठति )

वैन०—( अपवार्य ) वैकुण्ठ ! अभिनीयन्तां विप्रलम्भानुभावाः ।

वैकुण्ठः—( स्वगतम् )

तैस्तैः पृथुश्वसितपाण्डिमतानवाद्यै-
र्यं विप्रलम्भमभिनेतुमहं समीहे ।
सोऽयं पयोनिधिसुताव्यवधानदुःख-
सन्धुक्षितो भवति सम्प्रति सत्य एव ॥ ३ ॥

वैन०—पियसहि मोहणिए ! किं उण अत्ताणं अणवेक्खिय एवं उत्तम्मसि ? । साहेसु मे शिविणअदिट्ठं तं सुहअं[1] ।

मोहनिका—णिउणिए ! अलं साहिदेण । णहु णहु तेण सारिक्खेण तिहुअणम्मि कोवि अत्थि[2] ।

बलिः—( आकर्ण्य सोत्कण्ठम् ) किं पुनरित्थमद्भुतसम्भावनया सुकृती सुदृशा कृतार्थीक्रियते ।

कुजम्भः—एहि तावत्प्रकटीभवावः ।

( उभावुपसर्पतः )

निपुणिका—( सहसोत्थाय सप्रश्रयम् ) महाभाअ ! पणामो भट्टिदारिआए[1] ।

बलिः—( सगद्गदम् ) अभिलषितमासादयतु भवद्भर्तृदारिका ।

वैकुण्ठः—( स्वगतम् ) गद्गदगलिताक्षरापि सम्पूर्णेयमुपश्रुतिर्भविष्यति ।

---

१ प्रियसखि मोहनिके ! किं पुनरात्मानमनवेक्ष्य एवमुत्ताम्यसि ? । साधय मे स्वप्नदृष्टं तं सुभगम् ।

२ निपुणिके ! अलं साधितेन । न खलु न खलु तेन सदृक्षो न कोऽपि त्रिभुवनेऽस्ति ।

१ महाभाग ! प्रणामो भर्तृदारिकायाः ।

कुजम्भः—( उत्तरीयमासनवत्कृत्वा ) इदमलङ्करोतु दानवेन्द्रः ।

बलिः—( उपविश्य सहर्षोत्कण्ठं स्वगतं साश्चर्यं )

अनुभूतपूर्वमित्थं स्त्रीरत्नं न खलु वेधसः शिल्पे ।
मदनस्य भुवनजयिनः शक्तिर्मायामयी किमियं ? ॥

( प्रकाशं सखीरूपं वैनतेयं प्रति ) भद्रे ! केयं भवद्भर्तृदारिका ? । किं निमित्त-मुत्ताम्यति ? ।

निपुणिकावेषो वैनतेयः—महाभाअ ! एसा खु कमलाए कणिट्ठा समुद्ददुहिदा । जदोपहुदि इमीए कोवि अब्भुदरूवो सुहओ सिविणए पुलोइदो तदोपहुदि अब्भंतरविअंभमाणडाहुड्डामरवेअणाए णिविडविलयावगुण्ठणा किलम्मदि । परं परमसाहसिअव्व ण बीहेदि मरणादो । अण्णहा—

अग्घाइ करुणअं का झंपइ का मलयगंधवाहम्मि ।
का जीविए सअण्हा कलअंठकुहूझुणिं सुणई ॥ ४ ॥

( साकूतस्मितम् ) संपइ उण तुम्हाण दंसणादो पहुदि किंपि किंपि आसत्तिं व विहावेमि । का मुणेदि अत्थि तुम्हाण सिविणयदिट्ठसारिक्खं ण वेत्ति ।

( निपुणिकावेषं वैनतेयं तर्जयन्निव तिर्यगवलोकनैः सव्रीडमधोमुखं तिष्ठति )

बलिः—( सौत्सुक्यं सोत्कण्ठम् )—

मामनुगृहाण मुग्धे ! दृक्पातैरमृतपाटवग्रहिलैः ।
जीवितमजीवितं मे सम्प्रति सुभ्रु ! त्वदायत्तम् ॥ ५ ॥

( वैकुण्ठः अवाङ्मुख एव सस्मितं पश्यति )

बलिः—( सहर्षोत्कण्ठ स्वगतम् )—

लोचनसरोजमाला प्रेमगुणेनेयमद्भुता ग्रथिता ।
विश्राम्यति मयि दिष्ट्या सुतनोः संवरणमालेव ॥ ६ ॥

---

१ महाभाग ! एषा खलु कनिष्ठा समुद्रदुहिता यतः प्रभृति अनया कोऽपि अद्भुतरूपः सुभगः स्वप्ने दृष्टः ततः प्रभृति अभ्यन्तरविजृम्भमाणदाहोड्डामरवेदनया निबिडविलयावगुण्ठना क्लाम्यति । परं परमसाहसिकेव न बिभेति मरणात् । अन्यथा—

अर्घादि करुणकं का झम्पति का मलयगन्धवाहे ।
का जीविते सतृष्णा कलकण्ठकुहूध्वनिं शृणोति ॥

२ सम्प्रति पुनः युष्माकं दर्शनात्प्रभृति किमपि किमपि आसक्तिं विभावयामि । का जानीते अस्ति युष्माकं स्वप्नदृष्टसादृश्यमस्ति न वेति ।

(प्रकाशम्) सखे कुजम्भ! सम्भावितोऽस्मि सुहृदशा प्रसादेन। किं पुनश्चिरयति गुरुर्नो भगवान्भार्गवः?। स हि मया अमृतप्राशनमहोत्सवे अग्रासनार्थं सन्धानकं प्रेष्य समाहूतस्तत्किं सन्धानकः पङ्गुः कर्मान्तरव्यग्रो वा गुरुः?।

(ततः प्रविशति सन्धानकेनानुगम्यमानो भार्गवः)

सन्धानकः—(सप्रणामम्) दाणवेस! एसो भग्गवो गुरू संपत्तो[1]।

(बलिः ससम्भ्रमं यथावदुपस्थाय प्रणमति)

शुक्रः—(सहर्षम्) वर्द्धतां वर्द्धतां कलिः। (स्वगतं सवैलक्ष्यम्) आः कथं मे हर्षभरव्याकुलस्य बलिरिति वक्तव्ये कलिरिति समागतम्!। भवतु। यातु तावदविदितमेवैतत्।

सन्धानकः—(वृषीमुपनीय) अलंकरेदु एदं अज्जो[2]।

शुक्रः—(उपविश्य कन्यारूपं वैकुण्ठमालोक्य स्वगतं साश्चर्यम्) अहो अदृष्टपूर्वमद्भुतमिदं स्त्रीरूपं प्रजापतेः सर्गे। तत्केयं मायामयीव?।

(स्त्रीरूपो वैकुण्ठस्तथैव सव्रीडमास्ते)

बलिः—(सहर्षम्) भगवन्भार्गव! रत्नाकरस्य तनयेयमपरा रूपोपहसितकमलालया मयि सरागा। अतःपरं भगवान्प्रमाणम्।

शुक्रः—(सहर्षम्) किमत्र विमृश्यमस्ति। निष्प्रत्यूहो भव सर्वाभ्युदयपरम्पराणां पात्रम्।

(नेपथ्ये)

न मन्यते सुदारुणं दैवमेतत्। यदेतैर्गृहीतसकलसमुद्रोपार्जितद्रव्यैर्देवैरपहस्तिताः परित्यक्तसमराङ्गणाः समापतन्ति विक्लवा दानवाः।

बलिः—(सक्रोधमुत्थाय) आः! किं दुर्बलो बलिः संवृत्तः?, यदेवं भविष्यति।

कुजम्भः—सज्जय सज्जय सैन्यानि।

शुक्रः—(वामाक्षिस्पन्दनं सूचयित्वा स्वगतं सविषादम्) आः! कथं मदुपश्रुतिदुर्निमित्तं दुर्निमित्तान्तरमप्यनुवर्त्तते। तदेवं तावत्। (प्रकाशम्) अयि दानवराज! न युज्यते तदाजिमहोत्सवः। सम्प्रति समुदिता देवाः।

---

१ दानवेश! एष भार्गवो गुरुः सम्प्राप्तः।

२ अलङ्करोतु एतामार्यः।

बलिः—( सोपहासम् ) गुरो भार्गव ! जानात्येव भवान्बलेर्बलम् । त-त्किमिदमुच्यते ? । ( ससंरम्भम् )

महोःस्तम्भविघूर्णितेन तरसा येनैव मन्थाद्रिणा
पाथोधिः स तथा तथा प्रमथितस्तद्द्रव्यजातं ददौ ।
तेनैवाद्य वृथा भुजोष्मचपलान् निष्पिष्य दैत्यद्रुहो
भूयोऽस्याः पितरं करोमि सहसा दुर्द्धर्षहर्षोत्कटम् ॥ ७ ॥

शुक्रः—दैत्यपते ! कृतामृतप्राशनस्य भवतो मृत्युञ्जयस्य सुखावहः समरारम्भः ।

बलिः—( सगर्वम् ) गुरो ! भैषज्यमात्रमिदं पीयूषम् । किमनेन ? ।

असागरोत्पन्नमतीव चित्रं
पीयूषमेतद्भुजयोर्द्वयं मे
निर्माय यद्वैरिकुलावसानं
ममामरत्वं सहसा बिभर्त्ति ॥ ८ ॥

प्रतिज्ञातमिदं मया भगवतो गुरोः पुरतः ।

पीयूषाभ्यधिकं प्रहर्षसुहितान्संसारयात्रात्यजो
धारातीर्थगतायुषः प्रतिभटान्कृत्वा रणप्राङ्गणे ।
त्वय्यग्रासनपूजिते कुलगुरौ सार्द्धं सुहृद्बान्धवैः
मोहिन्या सह कान्तया सरभसः प्राप्नोमि नो वा सुधाम् ॥ ९ ॥

मोहिनीवेषो वैकुण्ठः—( स्वगतं सहर्षम् ) दिष्ट्या भग्नस्तावद्भार्गवस्य मन्त्रः । दिष्ट्या कृतान्तदोलामिव दुष्प्रतिज्ञामारूढो बलिः ।

शुक्रः—( सक्रोधम् ) बले ! अवसन्नं दानवकुलं यदेवमसद्ग्रहगृहीतो भ-वान् । तदप्यवबोधयामि भवन्तम् ।

चरित्रं पातङ्गं यदसिशिखिनि प्रापुरचिरा-
न्महादैत्यास्ते ते मधुमुरहिरण्याक्षनरकाः ।
इदानीं वैकुण्ठः किमु स महिलाभावमगम-
द्यदेतत्प्रागल्भ्यं स्फुरति भवतो दोर्मदमयम् ॥ १० ॥

( वैकुण्ठवैनतेयौ साकूतमन्योन्यमवलोक्य संवरणं नाटयतः )

बलिः—( सगर्वम् ) गुरो भार्गव ! किं प्रलपसि ? । महिलैव ममाग्रतो वैकुण्ठः । एतदेव भवतामहमभ्यर्थये—

विचित्ररूपामनुबन्धिरागां
स्वयं समेतां महते सुखाय ।
कन्यामपूर्वां परिपालयैतां
माभून्ममायं विफलः प्रयासः ॥ ११ ॥

सखे कुजम्भ ! उपनय मे पीयूषभाजनम् ।

( कुजम्भः उपनयति )

बलिः—( पीयूषभाजनमादाय कन्यावेषं वैकुण्ठं प्रति )—

पीयूषमेतद्दयिते ! गृहाण
त्वमेव पीयूषमिदं वृथा मे ।
सम्पूर्णकामा कतिचिन्मुहूर्त्तै-
र्भव प्रिये यामि रणोत्सवाय ॥ १२ ॥

( इति पीयूषपात्रमग्रतो धारयति )

कन्यारूपो वैकुण्ठः—( सकरुणं सगद्गदमिव ) समरविजयत्थं पउत्थे अज्जउ- ( इत्यर्धोक्ते सलज्जमिव सगद्गदम् ) दुवे तिण्णि मुहुत्ताइं पडिवालइस्सं । पुणो एदं णिरुवउत्तं तणुं पावअसमागमंमि परिक्खइस्सं[१] ।

बलिः—( ससम्भ्रमम् ) सुभ्रु ! क इदानीं शोकावसरः ? । आगतप्रायोऽहम् ।

( इति त्वरितपदं निष्क्रामति )

स्त्रीरूपो वैकुण्ठः—( स्वगतं सहर्षम् ) सिद्धं समीहितेन महाप्रत्यूहेनेव गतमनेन । तदलमिहस्थितेन । तदेवं तावत् । ( प्रकाशं सलज्जमिव ) पिअसहि ! करेहि हत्थे एदं अमअभाअणं । णिउणिआ खु तुमं । णहु कहवि तुमाहिन्तो एदं पब्भट्ठं भोदि । पुणोवि तए एदं आणिदं[२] ।

( वैनतेयस्तथा करोति )

शुक्रः—( स्वगतं साशङ्कम् ) आः ! परकरे भवति पीयूषं विशङ्कते च ममात्मा तत्किमत्र करवै । भवतु किमनेन बलेरेव दुर्विलसितमिदम् ।

---

१ समरविजयार्थं प्रवृत्ते आर्यपुत्रे द्वित्रीणि मुहूर्तानि प्रतिपालयिष्ये । पुनरेतन् निरुपयुक्तं तनुं पावकसमागमे परिलक्ष्यामि ।

२ प्रियसखि ! कुरु हस्ते एतदमृतभाजनम् । निपुणिका खलु त्वम् । न खलु कथमपि त्वत्त एतत्प्रभ्रष्टं भवति । पुनरपि त्वया एतदानीतम् ।

**वैकुण्ठः**—( स्वगतम् ) अलमिदानीं विलम्बेन। ( अनुस्मृत्य )। विद्रवाय पावकमानयामि। ( इति पावकस्मरणमभिनयति )

**शुक्रः**—( समन्तादवलोक्य ससम्भ्रमम् ) आः किमेतत् ?

विशालज्वालाभिः कवचयति दिक्चक्रमचिरा-
न्महाधूमस्तोमैर्जनयति नभः पीवरतरम्।
अतिक्राथादूर्ध्वं तरलयति च क्षीरजलधिं
विना कल्पापायं प्रसरतितरां कोऽयमनलः ? ॥ १३ ॥

अपि च—

धूमस्तोमकदर्थनादिव गतं कुत्रापि तिग्मत्विषा
तत्कृत्यः क्रियते तदेष शिखिना शश्वत्प्रकाशः स्वयम्।
ज्वालाजालपरम्पराभिरनिलव्याघूर्णिताभिर्बला-
द्भूयो विश्वमिदं हिरण्मयमहाब्रह्माण्डभाण्डायते ॥ १४ ॥

तत्किमत्रोचितम् ?।

**वैकुण्ठः**—पिअसहि णिउणिए !। णत्थि तस्स सुहअस्स भद्दं। ता एहि जलणपसंगेण अत्ताणं कअत्थं करेम्ह[1]। ( उभावुत्तिष्ठतः )

**शुक्रः**—( स्वगतं साशङ्कम् ) अहोऽस्याः पूर्वानुराग एव मरणान्तं प्रेम। गृहीतामृतैव चैषा पावकप्रवेशमारभते। तद्द्वयमपि न मया परिरक्षितम्। भवतु वारयामि। ( प्रकाशम् ) अयि कल्याणि ! किमकल्याणमिदमकस्मादारभ्यते ?। प्रतिपालय कतिचिन्मुहूर्त्तान्।

**वैकुण्ठः**—( सविषादं सलज्जमिव ) अज्ज ! किं अणज्जोचिदं मन्तेसि। एव्वं ज्जेव तस्सिं तुट्टसिस्से बद्धरागाए मह उचिदं भोदि[2]।

**शुक्रः**—अयि मुग्धे ! तवामृतस्य च रक्षार्थं त्वत्समक्षमेव दानवेश्वरेणाभ्यर्थितोऽस्मि। तद्यदि वार्यमाणा न निवर्त्तसे तदग्निस्तम्भमपि करिष्ये।

**वैकुण्ठः**—( स्वगतम् ) हस्ते गतं तावदमृतं संवृत्तम्। तदिदानीमस्यापि पश्यामि कौतुकम्। ( प्रकाशम् ) करेदु अज्जो जं उचिदं भोदि[3]।

---

१ प्रियसखि निपुणिके ! नास्ति तस्य सुभगस्य भद्रम्। तदेहि ज्वलनप्रसङ्गेन आत्मानं कृतार्थं कुर्मः।
२ आर्य ! किमनार्योचितं मन्त्रयसि ?। एवमेव तस्मिन् त्रुटितशीर्षे बद्धरागाया ममोचितं भवति।
३ करोतु आर्यः यदुचितं भवति।

**शुक्रः**—( अग्निस्तम्भमन्त्राभिनयं कृत्वा साश्चर्यम् ) अहह ! !

विशालफालैः प्रसभं प्रसर्प्प-
न्नग्राग्रतो झम्पति तीव्रतेजाः ।
न मन्यते मन्त्रमयं प्रयोगं
वीरव्रताविष्ट इवैष वह्निः ॥ १४ ॥

( विमृश्य )

अपि लयसमयोत्थे वीतिहोत्रे प्रयुक्ता
नहि नहि विमुखीस्याद्भार्गवी मन्त्रशक्तिः ।
सततमसुरवंशध्वंसबद्धावधानः
क्वचिदपि तदिहास्ति क्रोधनः कैटभारिः ॥ १५ ॥

तन्निरूपयामि ध्यानेन । ( ध्यानाभिनयं कृत्वा स्वगतम् ) अहह ! ! मुरारिरयं महिलारूपस्तत्सम्प्रवृत्तस्तावदनर्थः । किमद्यापि भयेन ? । ( प्रकाशं सगर्वोपहासम् ) वैकुण्ठ ! वैकुण्ठ !

धिग्धिग्सुधां वार्द्धिविलोडनोत्थां
धिग्धिक् च तद्दुर्लभवस्तुपानम् ।
किन्नाम नासं दनुजप्रवीरै -
र्वैकुण्ठ ! यत्त्वं महिलाकृतोऽसि ॥ १६ ॥

**वैकुण्ठः**—( सोपहासं महिलारूपं परित्यज्य ) भार्गव ! त्वमेव नयमार्गे निपुणः । किमित्थं व्याहरसि ? ।

**वैनतेयः**—( स्त्रीरूपं परित्यज्य सोपहासम् ) दैत्याचार्य ! साधयामस्तावत् । त्वमपि गत्वा दैत्यैः सहाग्रासनीभवामृतप्राशनमहोत्सवे ।

( इति निष्क्रान्ताः सर्वे )

द्वितीयोऽङ्कः

## तृतीयोऽङ्कः

( ततः प्रविशति कृष्णो लक्ष्मीश्च )

कृष्णः—( लक्ष्मीं विभाव्य स्वगतं सहर्षोत्कण्ठम् ) नूनमीदृग्विधस्त्रीसर्गशिल्पे वैदेशिक एव वेधाः । तथाहि—

इन्दोः कलास्त्रिदशपादपपल्लवानि
पीयूषमुज्ज्वलरुचो मणयश्च ते ते ।
यस्याद्भुतोपकरणावलिरित्थमस्ति
स्रष्टुं स एव भवति प्रभुरब्धिरेनाम् ॥ १ ॥

( सखेदम् ) किं पुनरिमां विषादवशंवदामिव विभावयामि ? । ( विमृश्य ) नूनमस्याः पाणिग्रहणसमयप्रत्यासत्तिमाकर्ण्य कन्याभावसुलभमाविर्भवति वैमनस्यम् । भवतु सम्बोधयामि । ( प्रकाशम् )

मुञ्च प्रिये ! पितृवियोगभयाकुलत्वं
नेत्रे नियन्त्रयसि किं चरणाङ्गुलीषु ।
त्वत्सौमनस्यसुखसञ्चयनैकतानः
स्थास्यामि सुभ्रु ! जलजन्तुवदन्तरब्धेः ॥ २ ॥

लक्ष्मीः—( स्वगतं सहर्षम् ) एवंपि भोदि, आदु आसासेदि मं सुहओ?[1] । ( प्रकाशं सबाष्पगद्गदम् ) कुदो एदं महणवेअणादो पहुदि दंसणमेत्तंपि मह दुलहं देवदारूवस्स तादस्स । एदंच्चेव तव रूवं पअडं पेच्छामि ।

कृष्णः—अयि सुतनु ! प्रत्यासन्नमेव तव तातदर्शनम् । ननु प्रभुणा पिनाकिना प्रजापतिप्रमुखत्रिदशैरपि लोभवशविहितानौचित्यैरपराधीनमिवात्मानमाशङ्कमानैर्भगवन्तमम्भोधिमानेतुं वरुणः प्रेषितोऽस्ति । गाम्भीर्यावधेश्च तव तातस्य मन्दरावर्तमात्रेण का वेदना ? । मथनार्जितद्रव्यजातादपि यद्यदस्य महोदधिर्दास्यति तत्तस्य भविष्यति । तत्समाश्वसीतु भवती ।

कृष्णः—( विभाव्य स्वगतम् ) अहो सङ्कटं कन्यकानाम् ।

( लक्ष्मीः समाश्वस्य सकरुणस्नेहं सागरमवलोकते )

---

१ एवमपि भवति अथवा आश्वासयति मां सुभगः । कुत एतन्मथनवेदनातः प्रभृति दर्शनमात्रमपि मम दुर्लभं देवतारूपस्य तातस्य । एतदेव तव रूपं प्रकटं प्रेक्षे ।

ज्ञातिविश्लेषवैक्लव्यात्प्रियलाभमहोत्सवात् ।
मुहुर्ज्वलति कन्यानां प्रीयते च मुहुर्मनः ॥ ३ ॥

तदेवं तावत् । ( प्रकाशम् ) प्रिये प्रिये !

आश्लेषलालसमिलद्बहुवीचिबाहुः
कारण्डवक्वणितकल्पितपेशलासीः ।
त्वां द्रष्टुमुत्क इव सम्भृतनेत्रलक्ष्मीः
लोलाक्षि ! राजति चलत्तिमिरम्बुराशिः ॥ ४ ॥

( लक्ष्मीः सहर्षमास्ते )

कृष्णः—( वामाक्षिस्पन्दनं सूचयित्वा स्वगतं सविषादम् ) आः ! किमद्यापि कोऽपि प्रत्यूहोऽस्ति ? । ( नेपथ्ये ) कष्टं कष्टम् ।

अह्नाय लुम्पन्निव सर्वलोका-
नाकाशमाशाः पृथिवीं पिधाय ।
कल्पान्तकालाभिनये पटीया-
न्विजृम्भते कोऽपि नटोऽन्धकारः ॥ ५ ॥

अपि च—

उपार्जिताः सागरमन्थखेदा-
च्चन्द्रादयोऽमी परमाः पदार्थाः ।
दुर्वातबाधाविधुराः प्रसह्य
पुनर्यियासन्ति पयोधिमध्यम् ॥ ६ ॥

कृष्णः—( श्रुत्वा ससम्भ्रममुच्चैःकारम् ) अयि दिक्पालाः ! पालयत पालयत मुहूर्तं प्रयत्नेन यावदायाति वैनतेयः । स हि मया विषवेगविक्लवस्य कपर्दिनो वार्त्तामुपलब्धुं प्रेषितः । अहं च पीयूषं कमलां च परिरक्षन्नस्मि । इह किल निरलसा लालसता दुर्दैत्यानाम् । ( सनिर्वेदखेदम् ) आः ! कथं सोऽपि शिवोऽसत्यशिव इव संवृत्तो यः कालकूटमात्रादपि दारुणां विपदमनुभवति ।

( ततः प्रविशति कृतकपटकपर्दिवेषो भार्गवः )

भार्गवः—( सावेगं ससम्भ्रमम् )—

कृष्ण ! कृष्ण ! विलीयन्ते ममाङ्गानि विषोष्मणा ।
देहि देहि तदेतन्मे पीयूषं किं विलम्ब्यसे ? ॥ ७ ॥

कृष्णः—( स्वगतं सविषादम् ) आः ! कष्टं कष्टं दृष्टमदृष्टपूर्वम् । अहह !. इदमेव दुर्निमित्तं यद्घोरोऽन्धकारो यद्दारुणः समीरः । तत्पाययामि पीयूषं, न पुनरस्य समीपे पश्यामि वैनतेयम् । अहो महदिदं विमर्शस्थानम् ।

तथाहि—

दहतु दहतु घोरः शङ्करं कालकूटो
नहि नहि तदपि स्यादित्थमत्याकुलत्वम् ।
अभिनयमपि दिव्यस्यानभिज्ञो विधातुं
स हि परतरतेजोमूर्त्तिरार्त्तेरधृष्यः ॥ ८ ॥

तन्निरूपयामि ध्यानेन । ( ध्यानाभिनयं कृत्वा सक्रोधम् ) आः शुक्र व[illegible] ! किमिदं कृतवानसि ? । शङ्करवेषधरोऽसि द्विजोऽसि चेति कृतापराधोऽपि न मे वध्योऽसि । तद्गच्छ यावन्न शिवनयनगोचरतां प्रपद्यसे ।

( शुक्रः सभयं तिरोधत्ते )

( ततः प्रविशति वै[illegible]नेयेनानुगम्यमानः शङ्करः )

कृष्णः—( विलोक्य सप्रश्रयमुत्थाय साकूतस्मितम् ) नमो नमो [illegible]कपटशङ्कराय । इत आस्यताम् ।

शङ्करः—( वैनतेयोपनीतमासनमधिष्ठाय सस्मितम् ) कृष्ण ! कृष्ण ! केयमद्भुता तवाद्य विशेषोक्तिः ।

कृष्णः—( सस्मितम् ) किं विज्ञप्यते सर्वज्ञाय ? ।

शङ्करः—( सहर्षं विहस्य ) कृते प्रतिकृतं समुचितमारब्धं भार्गवेण । त्वया हि कृतकैतवकान्तारूपेण वञ्चिता दैत्याः । प्रत्याहृतं पीयूषम् । किमुच्यते त्वयैवेदं विचित्ररूपं दिविषत्कार्यनिर्वहणकोटिमारोप्यते । तत्किं चिरयति वार्द्धिमानेतुं प्रेषितो वरुणः ? ।

कृष्णः—अयि वैनतेय ! त्वमपि महेशादेशेन गत्वा त्वरितमानय सागरम् ।

वैन०—( कतिचित्पदानि दत्त्वा व्यावृत्य ) आयान्त्यमी ब्रह्मादयो देवाः, एष चाभ्येति वरुणेनानुगम्यमानो रत्नाकरः । तत्किमेनमेते प्रत्युत्थातुं गताः ? ।

कृष्णः—वैनतेय ! नहि नहि । एते किल भार्गवोत्पादितमायान्धकारदुर्वृत्तविद्रवचन्द्रादिधारणोद्विग्ना नूनं तीरदेशे मिलिताः समायान्ति ।

( ततः प्रविशन्ति यथानिर्दिष्टा ब्रह्मादयो देवा वरुणेनानुगम्यमानः सागरश्च )

महेशकृष्णौ—( सप्रश्रयमुत्थाय ) अभिवादयावहे अत्रभवन्तं जगज्ज्येष्ठम् । इत आस्यतां सह महेन्द्रादिभिर्यथायथम् ।

सागरः—( सप्रश्रयम् ) एष वः प्रणमति समुद्रः ।

कृष्णः—( सगौरवम् ) निषीदतु प्रत्यासन्नोऽत्र सवरुणो भवान् ।

( सागरः तथा करोति )

लक्ष्मीः—( सकरुणं सास्रम् ) ताद ! किं एदं संवुत्तं ? । ( इति कण्ठे लगति )

समुद्रः—( सकरुणं ) पुत्रि पुत्रि ! मा विषीद । भद्रं भविष्यति निर्वहणं रुद्रप्रसादेन ।

महेशः—( अपवार्य ) कृष्ण कृष्ण ! न शक्नोमि मुखमस्य दर्शयितुम् ।

( इति सविषादमधोमुखस्तिष्ठति )

समुद्रः—( सप्रश्रयम् )

दाक्षिण्यतस्त्रिजगदीश ! किमाकुलोऽसि ?
पश्य प्रसन्ननयनो मुखमुन्नमय्य ।
श्रेष्ठोऽसि मे नहि नहि प्रभुमात्रकस्त्वं
मन्येऽवमानमपि मानमहं भवत्तः ॥ ९ ॥

अपि च । नाहं क्लीबोऽस्मि न चान्येन केनापि पराभूतो यदेवं विषीदति देवस्तथाहि—

चञ्चद्वीचिचपेटताडितमुखैर्दृष्टोऽस्मि दैत्यैः कदा
मैनाकं परिरक्षितुं कुलिशतः शक्तोऽहमेकः परम् ।
सम्बुद्धोऽस्मि मयाऽन्तरौर्वदहनस्त्रैलोक्यदाहोत्सुकः
सर्गेऽपि प्रलयेऽप्यखण्डमहिमा शम्भोः प्रसादादहम् ॥ १० ॥

शङ्करः—( सहर्षं सगौरवम् ) किमुच्यते ?

सर्गस्त्वमाद्यस्त्वयि लब्धजन्मा
ससर्ज सप्तापि जगन्ति वेधाः ।
सर्वोपजीव्योऽसि तवोपजीव्यो
न सिन्धुराजः क्वचिदस्ति कश्चित् ॥ ११ ॥

तदिदं गृहाण द्रव्यजातम् । क्षमस्व नश्चापलम् ।

समुद्रः—( सहर्षं सप्रश्रयम् ) भगवन्भर्ग ! अनुग्रहोऽयं मयि कृतः । किमिदानीं प्रत्यर्पणेन निग्रहः क्रियते ? ।

शङ्करः—तद्भवानेव स्वमुखेन विभज्य सम्मानयतु देवान् ।

समुद्रः—एष सम्पादयामि देवादेशम् । ( समन्तादवलोक्य ) विनोदयन्तु मदुत्सङ्गमाकन्दवियोगवेदनां विरिञ्चिवदनारविन्दकानने सुस्वरा वेदेन्दिन्दिराः ।

( वेदाः सङ्क्रामन्ति )

समुद्रः—कृतार्थयतु मां प्रमथनाथशिरोनेपथ्यपदवीमासाद्य [illegible]श्चन्द्रमाः ।

( चन्द्रस्तथा करोति )

लक्ष्मीः—( स्वगतं सविषादम् ) कंठम्मि संठिदं मह जीविदं । ण जाणे किं भणिस्सदि तादो ।

कृष्णः—( स्वगतं सोत्कण्ठम् ) इदानीं मे सुकृतपरिपाकस्य फलावसरः ।

समुद्रः—( सहर्षम् ) उज्ज्वालयतु मत्कुलं कमलाकरकमलपरिग्रहेण भक्तजनानुग्रहग्रहिलो गोविन्दः । ( इति लक्ष्मीपाणिं कृष्णपाणौ निवेशयति ) अयं चास्तु कन्यामहादानस्य दक्षिणाकौस्तुभो मणिः । ( इति कौस्तुभमर्पयति )

कृष्णः—( लक्ष्मीं विभाव्य स्वगतं सोत्कण्ठम् )

ये तनौ सुतनोर्मग्नाः कन्दर्पस्य शराङ्कुराः ।
मत्पाणिचुम्बकाकृष्टास्तेऽमी रोमाञ्चकैतवात् ॥ १२ ॥

समुद्रः—अयं च निष्कन्दयतु दुर्दान्तदैत्यकुलकमलकाननं देवराजाध्यासनोपबृंहितस्तुरगराजोच्चैःश्रवसहचरः कुम्भीन्द्रः ।

( ऐरावतः सहोच्चैःश्रवसा पुरुहूतमाश्रयति )

समुद्रः—एतेऽपि सकलजगदुपकृतिपराणां महौषधीनां रत्नानां चाधारतया धन्यतरा भवन्तु मेरुमन्दरादयो धराधराः । ( औषधयः सह रत्नैर्मेरुमन्दरादीनाश्रयन्ति )

समुद्रः—स्वीकुर्वन्तु कृतदारिद्र्यनिधनानि निधानानि धनाधिनाथम् ।

( निधानानि तथा कुर्वन्ति )

**समुद्रः**—अङ्गीकरोतु सकलजगदाह्लादकारिणीं वारुणीं कृताहित-विनाशं पाशं च वरुणः। ( वरुणस्तथा करोति )

**समुद्रः**—अङ्कुशं महायुधमादाय प्रगल्भतां रिपुवंशविशसने निरङ्कुशो गन्धवाहः। ( वायुस्तथा करोति )

**समुद्रः**—कलयतु जगद्रक्षापरायणं कौणपनायकः कृपाणम्। ( निर्ऋति-स्तथा करोति )

**समुद्रः**—भवतु च सकलजगत्प्राणशमनः शमनोऽमुना दण्डेन चण्डतरः।

( यमः सहर्षमुत्थाय दण्डमादत्ते )

**समुद्रः**—विषमुररीकृत्य दुर्द्धर्षतरा भवन्तु वासुकिप्रमुखा महोरगाः विषमतरमिदं च।

( वासुकिः सहर्षमुत्थाय विषमादत्ते )

**समुद्रः**—सर्वदेवमुखमुपर्बुधमधितिष्ठतु पीयूषम्। एतत्प्राशनेन भवन्तु निर्जरा अमराः सुराः। ( पीयूषं वह्निमाश्रयति )

**समुद्रः**—( सहर्षोल्लासम् ) अयि भगवन्पीयूषमयूखशेखर !

अद्य त्वया प्रमथनाथ ! कृतः कृतार्थो
मन्थोपमर्दमहमुत्सवमेव मन्ये।
द्रव्याण्यमूनि वितरन्नमरार्थिसार्थे
यद्दातृतामुपगतोऽस्मि किमन्यदीहे ॥ १३ ॥

तथापीदमस्तु—

औदार्यशौर्यरसिकाः सुखयन्तु भूपाः
सन्मार्गवासितधियो विलसन्तु लोकाः।
वर्षन्तु बद्धपरितोषभराः पयोदाः
सारस्वतोत्सवमयाः कवयो भवन्तु ॥ १४ ॥

( इति निष्क्रान्ताः सर्वे )

तृतीयोऽङ्कः

---

इति महाकविवत्सराजविरचितः समुद्रमथनाभिधानः समवकारः समाप्तः।